# कथारत्नाकर:

## ( तस्य चायं प्रथमस्तरङ्गः )

प्रणेता

बाक् कन्बे

# The Katharatnakara

( Volume One )

By

Bak Kanbe



नेशनल पब्लिशिंग हाउस, दिल्ली

# Preface

I feel it a great pleasure to write these few lines by way of introducing 'KATHARATNAKARA' (Vol 1) to the world of scholars. The book is a product of my friend Shri Bak Kanbe (Kunbae) who wields almost a classical pen when he writes his commentaries in Sanskrit on various classical works in Sanskrit literature like The Meghaduta, or The Amarushataka, commentaries which are already known to the lovers of Saskrit Shri Bak Kanbe's contributions to Sanskrit literature through his commentaries are very significant and indeed serve as an inspiration to others to emulate him

The present work gives further proof of Mr Kanbe's interest in Poems and Folklore of Ancient India and also his ability to write excellent Sanskrit. It was my privilege as well as pleasure as The Head of the Department of Sanskrit in the Delhi University to peruse his work before it went to the press and now I express my hope that the world of scholars will heartily welcome this work I wish Mr Bak Kanbe many fruitful years to come.

*T G Mainkar*
Bhandarkar Professor
Head of the Department of Sanskrit,
BOMBAY UNIVERSITY

Bombay
23rd October, 1969

# कथारत्नाकरप्रस्तावः

बाङ्कन्ये

कथाब्धिसार्थकल्पद्रुं कल्पान्तस्थायिकीर्तिकम् ।
सोमदेवमभिष्टौमि क्षेमेन्द्रं च महाकविम् ॥१॥
वस्तुसारं समुद्धृत्य यदीयकृतितो मया ।
कथारत्नाकरो गद्यमयोऽधुना वितन्यते ॥२॥
कान्ताकटाक्षशरवद्रुचिरार्थगर्भः
प्रीणाति कस्य न मनो नु कथाप्रकर्षः ।
आश्चर्यचित्ररसदे मधुरे ममापि
तुष्यन्तु गद्यरसिकाः सुतरां कथाब्धौ ॥३॥
द्राघीयसा प्रवासेन विदूरदेशवर्तिन ।
देदीयते ह हृन्मर्म पुष्प परशुना यथा ॥४॥
समिधेव वियोगाग्निः सधुक्षितः प्रदीप्यते ।
अधिकं जन्मभूमेश्च बन्धूनां स्मरणेन च ॥५॥
येनासह्यवियोगदुर्गतिमयो हृन्मर्मसशोषणो
निर्वाप्येत मुहूर्तमात्रमपि वा संतापवैश्वानरः ।
विस्मर्येत कथं प्रवासविषमं वैव मुहुश्चिन्तयन्
संतापापनुदं तनोमि तु कथारत्नाकरं मञ्जुलम् ॥६॥
कथानां रत्नानां निधिमतनुकान्तिं वितनितुं
चमत्कारार्थाढ्यं श्रवणसुखकारं मधुरगम् ।

यतिष्ये बाक्कन्बेऽभिलपितफलोद्भूतय इह
नितान्त मोदन्ते हि सुचरितकार्यात् सुकृतिन ॥७॥

महानगरबोम्बेस्ये विश्वविद्यालयेऽस्ति वै ।
श्रीमास्त्र्यम्बकगोविन्दः शम्भुकृष्णप्रसादित. ॥८॥

विद्यासागरनिष्णातो विद्वत्कुलशिरोमणि ।
श्रीमाईणकरोपाह्वो विपश्चित्सार्थपूजित. ॥९॥

विद्यानौकर्णधारस्य विततसस्कृतार्णवे ।
तस्याभिमतसौहार्दात् सेयं सिध्यतु मे कृति ॥१०॥

# कथारत्नाकरस्य
## प्रथमतरङ्गविषयानुक्रमणिका


| | विषय | पृष्ठम् |
|---|---|---|
| | भूमिका | |
| | प्रस्तावः | |
| (१) | कथामुखम् | १ |
| (२) | पाटलिपुत्रकथा | ५ |
| (३) | उपकोशाकथा | १४ |
| (४) | योगनन्दमौनपरिहासकथा | २१ |
| (५) | वररुचिशापमुक्तिकथा | ३२ |
| (६) | गुणाढ्यकथा | ४८ |
| (७) | सहस्रानीककथा | ६८ |
| (८) | उदयनवासवदत्तापरिणयकथा | १०२ |
| (९) | पद्मावतीविवाहकथा | १५७ |
| (१०) | विदूषककथा | २०३ |

श्रीनाकूकन्येविरचितः

# कथारत्नाकरः

(प्रथमस्तरङ्गः)

## (१) कथामुखम्

शाश्वतीः समाः समुच्छ्रायेणात्युच्छ्रितगगनपरिचुम्बितुषारराशिच्छन्नशुभ्रशिखरसंचयहठावहेलितसमस्तमहीध्रसमूहो ननु पीवरनितम्बफलकगौरवगर्वितगजगतीनां विलासोत्फुल्लनेत्राणां नितम्बिनीनां नितम्बेष्विवानुमेमीयमानेषु निजनितम्बेष्वतिमानेषु वात्सल्येनार्द्रार्द्रेण दिविषदनिमेषलोचनपुरस्सरविद्याधरगन्धर्वाप्सरोऽश्ववदनमनुष्यप्रमुखनानाद्विपादचतुष्पादादिभ्यः प्राणिभ्यो विश्राणितमनोरमविहृतिस्थानो धवलिमनिर्जितेन्द्रोद्यानसुखसचारिहंसनिवहे पवित्रतुहिनराशिभिः सततं कृतोष्णीपोऽपि नयनाभिरामसार्वकालिकानेकवर्णपुष्पजालविचित्रीकृतवृक्षपङ्क्तिनीरन्ध्राधोवर्तिगहनाटवीकाननदेशातिशोभी सगरप्रपौत्रभगीरथतपोमहिमानीतजह्नुकन्यादिव्यप्रवाहपवित्रितत्वादाहोस्वित् त्रैलोक्याधीश्वरपशुपतिवत्सलगौरीजनकभूतत्वाद् वा सर्वलोकभाजनभाजनीभूतो महिम्ना निरवद्येन समुन्नत्या निर्वाच्यया चोभयथापि यथायथमधरीकृतनिखिलभूभृत् तुहिनाचलनामा तिष्ठति कौबेर्यां

दिशि धराधराधिराजो यं कविवशावतंसः कालिदासोऽपि सेनापतिषाण्मातुरोद्भववर्णनात्मके निर्दोषकाव्यगुणाङ्किते कुमारसंभवे स्वकीयप्रबन्धरत्ने "अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः। पूर्वापरौ वारिनिधी विगाह्य स्थितः पृथिव्या इव मानदण्ड" इति याथातथ्येन सप्रशंसं निवर्णयाञ्चकार यस्माच्चोत्तराहि विद्यमाने स्फटिकाद्रौ कैलासनाम्नि गुह्यकेश्वरसगास्त्र्यम्बको हिमाचलतनूजाद्वितीय कुवलयदलसवर्णेन कण्ठरञ्जितकालकूटस्यामलिम्ना दयितायाः पार्वत्या निर्मले दर्पण इव शुभ्रे कपोलेन्दौ कृत्रिमलाञ्छनच्छाया पीनःपुन्येन प्रतिबिम्बयन् यथासुख विहरति स्म स चात्मना साकं तथाविहरन्तं प्राणेश्वरं भर्तुं द्वितीयजीवितभूता गिरिजा रहसि दुर्भरस्नेहवशामन्दमन्दं स्ववदनारविन्दमधुरिमविमोहितमधुकरझंकारललितमभिबभाषे—हे त्रिभुवननाथ न केनाप्यनुश्रुतपूर्वां त्वदीयमायानिर्मितत्रैलोक्याद्भुतकथां मनो मेऽतिमात्रं शुश्रूषत इति सस्नेहनिगदितप्रियजायावचो निशम्य प्रीतिस्मेराननः प्रमोदप्रफुल्लनेत्रोऽर्धेन्दुमौलिस्तां वामलोचनामङ्कस्थया, पुरा मगमहोत्सवे प्रवृत्तेऽपि सुधांशुशेखरोऽयं कपालमालीति दक्षेणानिमन्त्रितत्वात् सद्य एव क्रोधाग्निना कयावशेषीकृतगप्ततनुमहामहत्म्य हताशस्य दक्षस्यात्मजाभूतायास्तस्याः पूर्वजन्मवृत्तान्तादारभ्य भुजबलोत्सिक्ततारकासुरधर्षितपाकशासनपुरस्सरत्रिविष्टपनिवासिविबुधनिकुरम्बसमुद्धरणार्थं-परिणयपर्यन्तं वर्तमानोदन्तं गभीरत गश्रावयन् प्रत्युवाद वरवर्णिनि तरसायत-

मृगाक्षि सम्प्रति कर्णौ कुरुष्वाप्रमेयहर्षसपज्जनयित्रीममरमनुजविषय-
कविचित्रार्थमयी कथामिमामित्येव सप्ताना विद्याधरभूभुजा चक्र-
वर्तिना विस्मयाविष्टमनोहारिणि- कथाप्रसगेऽथ प्रवृत्ते सति
प्रमथाधिपं धूर्जटिं दिदृक्षुः पुष्पदन्तो नाम गणाग्रेसर समाया-
तस्तथापि नन्दिना प्रतीहारेण निषिद्धप्रवेश सन् कर्हिचिदप्य-
निवारितचर मा प्रति किमेतदिति कौतूहलाकुलमनस्कत्वात् सपदि
समीरणपरिणतात्मदेहोऽदृष्ट एवान्तः प्रविश्य शभुना हिमाद्रि-
सुतायै निगद्यमाना तामेव कथां स्वच्छन्दमश्रौषीत् ततश्चासौ
पुष्पदन्तोऽपि स्वीयभार्या जयानाम्नी मेनकात्मजाप्रतीहारी कथा-
मेनां चेतोविस्मापनीमन्वशुश्रवत् पुनश्च तदनन्तरमेव तुहिनाद्रि-
दुहित्रा भवान्यानुयुक्ता मौग्ध्यविभूषणा जया मनोज्ञकथाजाला-
कर्णनजनितानन्दव्याकोशमुखसरसीरुहा भूत्वा भर्तृमुखाच्छ्रुत
तदेव कथाजाल तत्समक्ष वितताान तदनु च क्रोधव्याकुलीकृतचे-
तोवृत्तिश्चन्द्रमौलिवल्लभा दयित भर्तारमिति सरोषमवोचदन-
न्याकर्णितपूर्वं कथानक ननु मेऽचकथद् भवानिति प्रेयसीवचनं
श्रुत्वा, कारणमत्र तु तदानी पृषदश्वभूतेन पुष्पदन्तेनास्मद्गेहा-
भ्यन्तरं रह प्रविश्य तस्या कथाया श्रवणगोचरीकृतत्वमेवेत्थ
तद्रहस्यप्रकाशनं कुर्वाणे शभौ तत्रापराधिन गणाग्रीय पुष्पदन्त
झटिति समाहूय प्रज्वलितरोषज्वलनारुणीकृतकपोलभित्ति पर्व-
तेन्द्रदुहिना —अरे कथातस्कर निर्लज्ज मर्त्यलोके क्षणभगुरे द्रुतमेव
नि पतेति सभ्रूभङ्ग शप्तवती हे करुणार्द्रहृदये महेश्वरि भजस्व

प्रसन्नता शाप चाधुना निर्वापयेति सुहृदर्थे याचमानं पांशुले भूतले प्रणिपतितं पुष्पदन्तस्य सखाय गणोत्तमं माल्यवन्तमपि, रे रे आख्यायिकापाटच्चर पुष्पदन्त शृणु यदा कोशाधिपेन वैश्रवणेन प्राक् शप्तत्वाद् विन्ध्याचलगहने पिशाचतां गत. काणभूतिर्नाम गुह्यकचरस्त्वन्मुखादेव साक्षादिमामाख्यायिकामाकर्णयिष्यति तदा त्व शापपर्यवसान प्राप्स्यसि पुन. काणभूतितस्तामेव कथामनुश्रुत्य सोऽयं माल्यवानपि शापान्तं गमिष्यतीति शापावधिकल्पनां विधाय ततोऽशाप्सीत् क्षणान्तरे च प्रबलाभिशापदण्डताडितौ वयस्यौ तौ, अहो कष्टं, मर्त्यलोकमवतेरतुस्ततश्च काले व्यतीते बहुतिथे तीव्रशापवज्रनिपातितयोर्दुर्वहदौर्भाग्यभारपेपीड्यमानहृदयकूपयोस्तयोर्लोकयात्रावार्ताजिज्ञासाप्रेरितकौतूहलया गिरिसुतया पृष्ट. सन् सर्वज्ञ कृत्तिवासा खण्डपरशुस्ता प्रत्यवादीद् यद्यथा कौशाम्बीपुरवास्तव्यस्य द्विजाते सोमदत्तनाम्नस्तनूजभावमवाप्त. पुष्पदन्तो वसुधातले कात्यायनः श्रुतिधरो वररुचिश्चेति नामधेयत्रयेण विख्यातकीर्तिर्महावैयाकरणकुञ्जरो यशस्कोटिमारूढो वरीवर्ति तथा माल्यवानपि प्रतिष्ठानपुरि दक्षिणाहि गृहीतमनुजजन्मा सर्वलोकविश्रुतयशस्यगुणाढ्यो गुणाढ्यो नाम परममहिमभ्राजिष्णुबृहत्कथाप्रणेतृत्वेनाद्य खलु शोशुभ्यत इति कैलासगिरिशयनिगदित सश्रुत्य गौरी किंचित्करुणाविष्टमना सववृते तथा च तदीयप्रतीहारी जयापि स्वीयप्राणेश्वरविरहतनूनपात्तनूकृततनूस्तत्समागमैकाग्रमनोवृत्तिः किल बभूव ।



# (२) पाटलिपुत्रकथा

ततोऽतिदारुणशापकुलिशाघोनिपातितोऽपहृतसदानन्दमया-मर्त्यभावः पुष्पदन्ताभिधः पाशुपतपारिषदप्राग्रहरः कात्स्न्येन विस्मृतात्मपूर्वजन्मप्रवृत्तिर्विश्वंभरामवतीर्य क्षणविध्वंसिनि जीवलोकेऽसारे लब्धफल्गुमनुष्यजनुः शैशवात् प्रभृति सकृच्छ्रुतमात्राधिगतसाङ्गवेदपुरस्सरसाधारणबुद्धिमन्मानवदुरवगाहानेकशास्त्रकलादिरत्नसंदोहपरिपूर्णविद्यारत्नाकरपारगतातिसूक्ष्मकुशाग्रशेमुषी-प्रभाप्रभास्वरयशस्यात्मस्वरूप-निर्जितदुरारोहप्रांशुकीर्तिशृङ्गसमारूढो मूर्तिमान् सरस्वतीविलास इव विलसितप्रतिभातिशयचमत्कृताशेषजनमना यद्यदेकवार श्रुत तत्तत् स्मृतौ धारयत्ययमसाविति तस्यैव कुशाग्रबुद्धिमत्त्वविस्मितेन लोकेन श्रुतिधर इति कृतयथार्थनामा कात्यायनो वररुचिश्चेति खल्वाह्वयद्वयेनापरेणापि विश्रुतो भूत्वा पाटलिपुत्राधीशस्य मागधभूमण्डलपार्थिवस्य योगनन्दस्य महामात्यपद सवत्सरान् बहून् यथाशक्ति चोपसेव्य निकाम निर्विष्टविविधैहलौकिकविषयसभोगसौख्योऽपि कालेऽनित्ये समीरणातिगेन तरसाग्रेऽग्रे प्रधावति वयोजर्जरितजीर्णवाराङ्गनायामिवानिष्टाया जरायामपि पलितेन साकमागच्छन्त्या शनै शनैर्मर्त्यलोकसपत्संभोगेषु विरक्ति गच्छन् पयसि सततजातनष्टबुद्बुदवद-

सारस्येहलोके जन्मजरामृत्युभि. सह चक्रवत्ससेस्नीयमाणस्य ससारस्य तुच्छता मनसा कृत्वा संपरित्यक्तमहामात्रपदविर्विन्ध्यपर्वतकल्पितनिकेतना कात्यायनो दिदृक्षु प्रयाणपथे तस्थौ ततश्च स्वानुरूपतपश्चर्याराधनार्जितदर्शनप्रसादया देव्या प्रीतास्मि गच्छ गह्वरे काणभूतिनामान पिशाचमधुना दृग्गोचरे कुरुष्वेत्यादिष्टस्तत्रैव गुहाया घोराकृतिपिशाचशतपरिवारितमुच्छ्रितसालाकारमहाकाय भीषणदर्शनं काणभूतिं महाभूत समासाद्य विप्रावस्थासदृशेनार्चनाविधिना तेन सत्कृतस्तमनुयुयुजे विनीतशील. शिष्टाचार इवावलोक्यसे कथ नाम दशामीदृशी यातोऽसि केनवा कारणेन निस्तोयकर्कशकण्टकद्रुमभूयिष्ठे विरलविरलमानुपसंचारे दुरासदेऽटवीकान्तारे विहितवासोऽसीति पृष्टे तस्मिश्च काणभूतौ श्रूयता महानुभाव यदि कौतुकम् पुराह धनाधिपवैश्रवणानुचरो यक्षोऽतिनिकृष्टमित्रसगमदापात् प्रभुणा यथार्ह दण्डितस्तच्छापेन निष्ठुरपिशाचता गमित ईदृशमवस्थान्तर दुस्सहमनुवोभवीमि, दु:खोदर्केण स्वपापेन पापेन मया दुर्वसेऽतिभयानकेऽत्र कान्तारे सुचिरमुपित संप्रति शापवधौ मे पर्यवसितप्रायेऽचिरेण पुष्पदन्तसमागमावधिक शाप तरिष्यामि वार्तेयमाकर्णितं मया श्मशाननिवासिन. कपालभृत इति व्याहृत्या विरते तस्मिन् सहसा निज-जन्मान्तरवृत्तान्तजाल सविस्तार तदानी कैलासाद्रौ शंभूदीरितविचित्रकथापूर्वक सस्मृत्य सुप्तोत्थित इव अहो हन्त सोऽहं पुष्पदन्तोऽस्मि. शृणु मत्त कथामिति प्रस्तुत्य जातिस्मरो भूत्वोन्नतदयालुधीरत्यन्त-

चमत्कारिणी सप्तविद्याधरचक्रवर्तिसंबन्धिनी कथा महती काणभूतिं सश्रावयन् कथान्तेऽवोचद् दाक्षिणात्यो गुणाढ्यो नाम मौनव्रतमुद्रितवदनोऽग्रजन्मा त्वामासाद्य त्वन्मुखान्मयोदीरिता कथामेनां श्रोष्यति तदा युवां शापशृङ्खलाद् विमोक्ष्येथे निःसंशयमिति । अथ कल्याणावहतत्कथासश्रवणनितान्तविस्मृतान्तरात्मा सामीप्यसमासन्नदीर्घीकृतशापावधिपर्यवसानबोधनप्रफुल्लास्योऽत्युद्दामसंमोदविस्फारिताक्ष स राजराजानुचरचर काणभूतिस्तस्यातिमानुषं प्रभाव विदित्वा सविनय, हे प्रभो कृतज्ञोऽस्मि महानुभावशालिन भवन्तमृते कोऽन्यो रोमहर्षणीं कथामीदृशीं वेत्ति भवदीयानुग्रहेणैव निष्ठुरात् कौबेरशापान्मुक्तप्रायोऽहमभ्यर्थये ब्रवीत्वत्रभवानात्मनो लोकपूजितजन्मोदन्त यदि न गुह्यमत्रेति कृताञ्जलिरप्राक्षीत् ततस्तदभ्यर्थनानुरोधाच्च स पुष्पदन्त पूर्वजातिप्रतिपत्ति प्रतिपद्य दीर्घीभूतासह्यपीडप्रभुविरहद्विगुणीकृततद्दिदृक्षाकुलाकुलमनस्कत्वाच्छंभो पार्श्वे समुपतिष्ठासुरपि सर्वामाजन्मवार्तामात्मीया विस्तरश इत्थं कथापयति स्म अभूतां कौशाम्बीनगरे द्विजदम्पती सोमदत्तापराह्वयोऽग्निसोमो नाम श्रुतिसागरनिष्णातो निरवद्यचारित्रकवचो विपश्चिदग्रणीस्तस्य जाया वसुदत्ता नाम । सोऽहं शर्वाणीशापवशात् तस्माद्विप्रवरेण्यात् तस्यामुत्पन्न औरसस्तनयोऽस्मि श्रुतधर कात्यायनो वररुचिश्चेति यथावल्लोके विदितयथार्थनामा । शैशवे मे दैवदुर्विपाकाज्जनके कालधर्माकृष्ट प्राणात्ययमुपगते जननी मां कृच्छ्रादपूपुषत । एकदा दूराध्वमार्गधूलिधूसरौ

द्वौ विप्रावध्वनीनौ व्याडीन्द्रदत्तनामानावेकरात्रपरिश्रयार्थमस्मद्गृहमशिश्रियेताम् । तत्रान्तरे मृदङ्गध्वनिपुरस्सरं कोऽपि शैलूषो यदृच्छया प्रादुर्भूयास्मासु तिष्ठत्सु नृत्यं कर्तुं प्रारब्धः । ततश्च यथैव तेन कुशीलवेन नाटितं तथैव तौर्यत्रिकमनुकृत्य साकल्येन मयापि प्रदर्शितम् । मां च दृष्ट्वा शैलूषिकदर्शितनाट्यानुकृतिकुशलं सकृदधिगततौर्यत्रिकप्रयोगनैपुण्यशालिनं तावध्वगौ परमविस्मयोत्फारितदृशौ मद्गोत्रनामधेयमुपलभ्य मातरमित्यभाषिषाताम्, हे अम्ब वेतसपत्तने वशिष्ठगोत्रौ द्विजाती भ्रातरौ मानिनौ परस्परदृढबद्धभ्रातृस्नेहावभूताम् करम्भदेवसोमाभिधौ ययो· पृथग्जातौ सूनू विद्यालिप्सयावां पाटलिपुत्रसमाख्यं पुटभेदनं प्राप्तौ । पुरीह वर्षनामा ब्राह्मणोऽस्ति विद्यावारिधिस्तस्माद् विद्यासाकल्यं युवाभ्यां प्राप्यतामिति शिखिवाहनादेशाद् वर्षवसतिमासाद्य कुशलप्रश्नपूर्वं निजागमनप्रयोजनं विज्ञाप्य तत्कुटुम्बिनीं गुरुदेवप्रवृत्तिमप्राक्ष्व । अनुयुक्ता सा मधुरभाषिणी सरलहृदया प्रत्यवोचद् यदासीदेतस्मिन्नेव पत्तने श्रोत्रियोत्तम. शङ्करस्वामी नाम, प्रज्वलितविद्याद्युम्नस्य तस्यात्मजौ वर्षोपवर्षाख्यौ, तयोर्मध्येऽवरजो मम देवर उपवर्ष. सम्यगधीतनिर्वाच्यविद्याविख्यात· सर्वजनसपर्याभाजनं धनाढ्यश्च तथापि मदीयप्राणेश्वरभूतोऽग्रजस्तु विद्याविहीनो देवानांप्रियोऽतिनिन्द्यमौर्ख्यादात्मनोऽकिंचिज्ज्ञोऽकिञ्चनश्च पूर्वमभूत् ततश्चैकदा स्वविभवोत्सिक्ताहं-श्रेयोदूषिता दुर्विनीता देवृगृहिणी निर्लज्जा सती मद्भर्त्रेऽकुटिलस्वभावाय वर्षाय गोधूमपिष्टपिण्डं

गुह्यलाञ्छनचिह्नितं भक्ष्यं स्वयं ददौ तच्च गृहीत्वा मूर्खे तस्मिन् सहर्षं गृहं प्रत्यागते किं करोमि मन्दभागिनी हा धिग् हा धिग् हताऽस्मि मूर्खवल्लभेति सबाष्पोद्गारं सशोकमक्रुक्षम्, क्षणान्तरे चासावपि निजमौर्ख्यापत्रपितोऽन्तर्मन्युना भृशं परिसंतातप्यमानः कार्तिकेयमन्दिरमविलम्बितमुपेत्यानल्पं तपस्तप्तवांस्ततो भक्तिप्रीणितस्य वरदस्य षाण्मातुरस्य प्रसादेन सर्वज्ञतां लब्ध्वा, ज्ञानमिदं कात्स्न्येन श्रुतधराय स्वयं प्रदेहीति भगवदनुशासनमपि प्राप्य साम्प्रतं प्रत्यावृत्तो गृहं आस्ते इति वर्षोपाध्यायभार्याव्याहृतिं श्रवणविषये कृत्वा गुरुदेवं प्रश्रयपूर्वमभिवाद्य श्रुतधरानयये तदीयादेशं सगौरवं शिरसि धृत्वा वसुधरामण्डलमतिविशालं सर्वत्र परिबम्भ्रम्यमाणौ दैवयोगाद् दिष्ट्या ते सूनुरयं चिरादवाप्तौ त्वदनुमत्येदानीमेनं बुद्धिमन्तमादाय गुरुसकाशं समुपस्थास्यावहेऽनुज्ञां देहि त्वत्पुत्रापनयने मातरिति । अयि भो दयितबन्धुसुहृज्जनविरहे कस्य हृदयं कण्ठप्रतिरुद्धबाष्पौघेन परिपोपूर्यमाणं शोकेन न संतातप्येत, किं पुनरप्रमेयवात्सल्यपात्रीभूतस्य तनूजरत्नस्य हृदयच्छेदिनि विरहसमये ? कथंचित् कथंचिदनुनीता ताभ्यां विप्रयुवभ्यामुदश्रुवदना जननी मे, भूयासुः शिवाः वः पन्थानः, पुत्रक दिवानिशमतन्द्रितेन शास्त्राभ्यासेन चरितार्थो भूत्वा मामानन्दय नन्दनेति भाविकल्याणशंसिनीमाशिषं ददती वत्स मा दृढमुरसि कृत्वा शिरसि सस्नेहं जिघ्रन्ती कृच्छ्रेण महता मत्प्रयाणानुज्ञां व्यशिश्रणत् । अथ कालक्रमेण वयं सर्वे व्याडीन्द्रदत्तश्रुतधरा कार्ति-

केयप्रसादितवर्षोपाध्यायवेश्म समासाद्य विद्यापरिशीलनदीक्षापवि-त्रीकृतात्मान सन्तो रात्रिंदिवमेकाग्रेण मनसाध्ययनतत्परा अभूम तत पश्चात् कियत्कालव्यत्ययेऽह गुरुपादेभ्य सकृच्छ्रुतमात्रेण शिक्षितसाङ्गवेदाद्यागमसन्दोहो विद्यानिधि· समवर्तिषीत्येव व्याहृत्य मुहूर्त विरतो गणाग्रेसरपुष्पदन्तावतार कात्यायन: कथाश्रवणनि-रते काणभूतिनाम्नि यक्षचरे सावधानं शृण्वति पुनर्वक्तुमुपचक्रमे। एकदा पाटलिपुत्रीयमितिवृत्त पृष्टो मया पूज्यो गुरुदेव कथापयति स्म यत् पुरा दारुणावग्रहपरिशोषिने समये दुर्भिक्ष दुस्सह सम-जायत तस्यां चानावृष्टौ दीर्घीभूतायां केचन त्रयो द्विजभ्रातरो नृशंस्यविकृतचित्तवृत्तयस्तिस्र स्वस्वभार्या: पतिदेवता जीर्णोपानह इव लघु परित्यज्य देशान्तर किल प्रययु.। कदर्याणा मन सु कथ-नाम बन्धुजनं प्रति सौहार्द संजायेत ? ततस्तासा साध्वीना मध्य एकाऽन्तर्वत्नी समया पुत्ररत्नं पुत्रकाभिध सुषुवे। अथ कालेन तिसृणामस्मिञ्छिशौ सुदृढबद्धसमानस्नेहानां सतीना भक्तिवात्सल्य-तुष्टेन पिनाकिना वरदानेनानुगृहीतस्य प्रतिदिन सुप्तप्रबुद्धस्य शिरसि सुवर्णसहस्रं निरन्तरमुदपादि तेन च काञ्चनसहस्रेणाहर्दिवि प्रादुर्भूतेनातिमात्रस्फीतकोशोऽसौ पुत्रको राज्य लब्ध्वा रञ्जितपौर-जानपदो यथान्याय दण्डनीति नियुज्य सर्वा प्रजा प्रशास्ति स्म। एकस्मिन् समये भूरिदक्षिणे शभूपासनविधौ तेन नृपेण विधीय-माने बुभुक्षिता भिक्षार्थिनस्ते नृशंसा सोदरा जनपदान्तराणि परिभ्रम्य समाजग्मु·। स्वभावदयालुरुदारधीर्भूपति· पुत्रको मातृ-

भिरभिज्ञातानागन्तुकान् पितर पितृव्यौ च तास्त्रीस्तत्समागम-प्रमोदितमना सत्कारेणात्मानुरूपेण सप्रश्रयमर्चयांबभूव । एव काले गच्छति शनै शनैरेतेषा परदत्तसपत्सभोगविमोहितानामहयूना चेतस्याहोपुरुषिका सर्पिणी शिर इव दर्पमुदनैषीत् । कृतघ्नाना विवेकरहितानामनन्ततृष्णाना स्वभाव परद्रोहोन्मुख कथगिवान्यथा कर्तुं शक्यते ? इत्थकार वातेरितकृपीटयोनौ शुष्केन्धनेनेव दौरात्म्यसधुक्षितनोभेऽस्तृष्त्या प्रतिक्षण स्फीर्ति याति सति, वयं पुत्रकममु यथाशीघ्र कृतान्तसद्म नीत्वा सम्यगात्मसात्कृतराष्ट्रकोपबलादिसमग्रराज्याङ्गा. परमसमृद्धराज्यसपत्तिसभोगसुखानि निर्वेक्ष्याम इत्येकान्ते परस्पर समन्त्र्य राजद्रुहस्त्रयो भ्रातरो विन्ध्याधिष्ठितदेवीपूजाव्याजेन राजान निषूदनाय स्वगृहमानैषु किन्तु क्षणान्तरे स्व जिघासूना तेषा महापातकचेष्टित दिष्टया विदित्वापि वैरनिर्यातनविमुख सन् स नृपपुगवो राजन्वद् राज्य परित्यज्य केवलमात्मद्वितीयो विन्ध्याचलकान्तार जगाम । पुत्रकेण परित्यक्त तैश्च राज्यद्रोहिभिरात्मसात्कृतमपि तद्राज्यमचिरेण बलीयसाममित्राणा हस्ते न्यपाति। दुरात्मना नृशसाना चिरस्थायि कल्याण कुत संभवेत् ? अथाप्राप्यमनुष्यसचारे शार्दूलसिहादिघोरहिंसास्वेडितनिनादिते विन्ध्यकान्तारे भ्रमन्नक्षय्यधृतिमान् पुत्रकस्तत्र केशाकेशि बाहूबाहवि युध्यमानावसुरौ यदृच्छया निशाम्य पप्रच्छ कौ युवा किंव्यापाराविति । आवा सोदरौ दानवावेकभाजनयष्टिपादुकात्मक पैतृकस्वापतेय लक्षीकृत्य तज्जि-

घृक्षया बाहुसंग्राम कुर्व इत्यसुरयोर्वाक्यं निशम्य विहसन् पुत्रक प्राह तृणवत्तुच्छजीर्णवस्तुनिमित्तं नियुद्ध कुर्वाणौ लोकपरिहासपात्रता मा खलु यासिष्टं तत्समनन्तरमेव द्वा ऊचतुर्यदेत उपानहौ पादयो परिधाय गगनेचरत्व सपाद्यते यद्यदभिलपितमन्नादिक चिन्त्यते तत्तच्चिचतितमात्रेण भाजनेऽस्मिन् परिपूर्यते यत् किमपि भुवि सिसृक्षित तदनया यष्ट्या भूतल उल्लिखितमात्रेण स्वयमुत्पद्यत इति श्रुत्वा, युवयो. समकालमेव धावतोर्यो जवनतरस्तस्यैव स्वाम्ये पैतृकधन यष्टिपात्रोपानड्मयं सर्वथा तिष्ठत्वित्युपदिदेश पुत्रको मुहूर्तान्तरे तथास्तु बाढमिति तरसाऽहमहमिकया धावतोस्तयोर्मूढचेतसो पद्भ्यां पादुके परिधाय सर्वकामदं सर्वस्व परिगृह्य मक्षूदडयिष्ट सुखी विशालविशाले विष्णुपथेऽचिरेण च माव जिकपुरि कृतावतरण कस्याश्चित् स्थविराया वेश्मनि निवसन्नविरतसुवर्णप्रदत्वेन तयातिथिसत्कारेणोपचर्यमाण. पुत्रकस्तत्रत्यस्य महीपतेर्महेन्द्रवर्मणस्तनूजा लावण्यक्षीराब्धिचन्द्रिका लोकोत्तरवरवर्णिनी स्मरसर्वस्वभूतामिव मनोऽभिरामा पाटलामश्रौपीत्। रूपातिशयशोभिन्या मत्तकाशिन्या न केवल साक्षात्कारेण किंवदन्तीश्रवणेनापि कामातुरस्य कस्य यूनो मनो न ह्रियते ? यत कस्याचित् सुरतक्षणदायां क्षणदायामस्माकं दृष्टनायको मन्मथवेगमामन्थ्यमानहृन्मर्मा पादुकसाहाय्येन व्योम द्रुतमुत्पत्य कन्यान्त पुरहर्म्यपृष्ठे शयाना शाभवतृतीयलोचनानलभस्मीकृतपुष्पधन्वसजीवनौषधिमिव मूर्तिमतीमिव कौमुदीमनवद्याङ्गी-

भनामिन्दुमुखी पाटलामतृप्तेन चक्षुश्चपकेण पिबन्नतृप्तेन मनसा भुजान्तराले चकितचकितहरिणाक्षी सुदृढ ममैवेति जग्राह। तत्कालानुष्ठितगान्धर्वविवाहोत्सवयोस्तरुणदपत्यो. पारस्परिकानुरागे राशीभूतेऽचिरेण सा सरोजिनीव पुष्पिता बभूव। अथ कालक्रमेण पार्थिवेन विदितरहोवृत्तान्त प्रच्छन्नकामुक पुत्रको दयिता पाटलामङ्के कृत्वा नभोमार्गेण प्रचचार ततश्च भागीरथीतटं समया पाटलावचनानुरोधादनन्तप्रभावयष्टिलेखाभिर्यथाभिलषित सौवर्णप्रासादमालासुमाकुलं राष्ट्रकोशचतुरगबलादिसमन्वितमक्षय्यसमृद्धिसुखितपौरलोकमनेकविद्यालयसुमण्डित लक्ष्मीसरस्वतीविभ्रमस्थान नगर निर्ममे यत् पौरजानपदै. पाटलिपुत्रमित्यभिधीयते यत्र च पाटलया सार्धमक्लेशजहृदगगमनानाभोगार्थप्राचुर्यानुभवेषु सततसुखमय काल क्षणमिव यापयन् क्ष्माभृत् पुत्रकोऽनायसेन राज्यधुरमुद्वहन् मही शशासेति वर्षोपाध्यायमुखारविन्दादपूर्वं पाटलिपुत्रीयमुपाख्यानं श्रुत्वा तदानी, भो: काणभूते, वयमतीव विस्मितमानसा सुतरामन्वमोदिष्महीत्युक्त्वा कात्यायनो मुहूर्त विरराम।

---

# (३) उपकोशाकथा

उपरम्य मुहूर्तक स्मृतिप्रत्यवमर्शेन मनसि व्यतीतात्मीय-जीवनयात्रासस्मरणसतततितन्तु सखेदमिव वयन् यानि श्वोवसीयासि दिवसान्यनिर्वचनीयेषु परमसुखसतानेषु प्रफुल्लपुष्पमञ्जरीवामलोचनास्मेराननविलसितालोकशोभिनि मधुरमधुसमय इव मधुरसलोलुपमधुव्रत–श्रेणिशिञ्जिनीशिञ्जितटङ्कारसुभगकार्मुकारोपितपौष्पबाणशरव्यभविष्णुकामातुरमार्गणाकोविदमधु-सुहृत्प्रिये यौवने क्षणभगुरस्वप्नवद् व्यतिवाहितानि तेष्वपुनर्भवेषु स्पृहयालुरिव वररुचि काणभूतये कथासश्रवणैकाग्रमनसेऽनन्तरीय यौवनवृत्तान्तमुपवर्णयितुमुपचक्रमे, ततोऽह कालेक्रमेण सर्वविद्गुरुसकाशादासादितानवद्यविद्यासाकल्यभावितात्मा मौग्ध्यसारल्यमात्रमण्डित बाल्य निष्किल्बिषमतिवाह्य सुकुमारतरुणमनोमदयित्नु सर्वदमपुष्पधन्वसार्वभौमवशवदमभिनवपल्लवित यौवनमारूढो मदीयबहिश्चरजोवितसकाशा गुरुभिर्विधिवत् प्रतिपादिता वीतकलङ्कपौर्णमाससुधाशुवदनसतताकृष्टमदीयानिमिषदृष्टि नीलकौशेयमृदुपेशलचिकुरकलापसहेलनिर्जितबर्हिबर्हभारा सुरतप्रदीपायमानारुणाधराधरीकृतपक्वबिम्बा तारुण्यविभ्रमायतनभूतनीलसरसीरुहनेत्र नितान्तविमनीकृतेन्दीवरद्युतिमतिशयितमृणालकाण्ड—रुचिरभुज-

वल्लरी त्रैलोक्यविजिगीषुपञ्चसायकविजयाभिषेककलशायमानपीव-रोन्नतकुचकुम्भशोभिनी भुजबन्धनोचिततनुमध्यशालिनी मनोभव-क्रीडापर्वतायमानपीननितम्बभारगौरवादिव हंसगामिनी रम्भोरू-मपि तन्वगी मनोहरेषु शरीरावयवेषु वामामपि हृदयेऽवामा रूपे सौन्दर्यमयी मनसि सौजन्यमयी सुरतकेलिषु जातु धृष्टाचाराम-प्यन्यत्र न कदाचिदपि धृष्टाचारां किं बहुना मन्मथस्य सर्वस्व-भूतामपि मम सर्वस्वभूतामुपकोशासंज्ञामुपवर्षतनूजामुपयम्य तया सह ननु क्षणवत् सक्षिप्यमाणासु परमानन्दथुदायिनीषु तासु तासु त्रियामासु सुरतमहामह निरन्तर निर्विशन् परमार्थत. सुखाय-मान कालमनरपमत्यवीवहम् । तत एकदा जडबुद्धिमात्मान सुत-रामनुशुच्य तपसा तीव्रेण पार्वतीवल्लभात् कृशानुरेतसोष्टाध्यायी-समाख्यं सर्वविद्यामुखं नूतनव्याकरणमासाद्य प्रतिनिवृत्तं वर्षो-पाध्यायस्यान्तेवासिन सब्रह्मचारिणं पाणिनिनामान वासराष्टतया-वधिके वैयाकरणविवादे परिपन्थिन त यावत् पराजैष तावद्वि-रूपाक्ष सजातक्रोधो भीषणेन हुकारेणास्मान् सर्वान्जडीकुर्वन्न-स्मदीयं पारंपरीयमैन्द्रव्याकरण मंक्ष्वपाहार्षीत् । इत्थभूते किं करोमि हस्ताद्भ्रष्टं पारपर्येणागते तस्मिंश्चिरंतनेऽमूल्ये व्याकरण-रत्ने शम्भुनापहृते गत्यन्तराभावात्तपश्चर्याराधनोपायनैस्त कथमपि प्रसादयितुमना हिरण्यगुप्ताभिधस्योपकण्ठनिवासिनो व्यापारिणो हस्ते निजगृहस्थित्यर्थं द्रव्यं निक्षिप्य दयितायै तथाकृतं तन्निवेद्य च प्रयाणमार्गे पदमक्षेप्सम् । अथ प्रणयिनि मयि दूरीभूते प्रोषित-

भर्तृकानुरूपपातिव्रत्यमतन्द्रितेन व्रताचरणेन परिपालयन्ती मद्वियोगसंतापाशुशुक्षणिदन्दह्यमानपाङ्गुरक्षामाङ्गी तथा क्षीणप्रतिपच्चन्द्रकलावल्लोकलोचनद्विरेफाकर्षिणी शीघ्रयियासुभ्या पीनस्तनकुम्भाभ्या पुरस्तात् समाकृष्यमाणापि पृथुलश्रोणिभारादिव मन्दमन्द सिस्नासुर्भागीरथी प्रति व्रजन्ती मे भार्या विभवोत्सिक्तेन पार्थिवस्य प्राड्विवाकेन पुरोधसा सचिवेन च पृथक्पृथक्स्थितेन सस्पृहमुद्वीक्षिता ततो गगाजलविप्लवात् सध्याकाले प्रत्यागच्छन्ती, काममोहिताना तेषा तत्र मार्गे उत्तिष्ठता, प्राथमिकेन युवसचिवेन बलात्करेण भुजे गृहीत्वा प्रथमं मा भजस्वेति सनिर्बन्धमुक्ता सा प्रज्ञावती यथैतत् ते तथैव मेऽभीप्सितं किन्तु प्रवासस्थभर्तृकाहं कुलिनी घंटापथेऽविरलजनसचारे कथमेवं समाचरेय जातुचित् कोऽपि मा पश्येत् ततोऽनिष्टमावयोर्नूनमुत्पद्येत तस्मादितस्तृतीयेऽहनि दोषारम्भे गृहे मामुपतिष्ठस्वेत्यभिधाय यावत् किञ्चित् प्रचरति पुरोधसा पथि प्रतिरुद्धा तृतीये दिवसे निशाया द्वितीये प्रहरे गेहं ममागच्छेति सकेतकं दत्त्वा तस्मात् कथंचिन्मुक्ता कतिपयपदानि गच्छति तावत् प्राड्विवाकेनापि मदनाकुलेन हस्ते गृहीता सा तृतीये वासरे निशीथिन्या तृतीये प्रहरे सगमो मे त्वया भवितेति तद्वत्सकेतककल्पनया तमतिसधाय भीतभीतेक्षणा स्वनिवेशन प्राविक्षत्। तत्रान्तरे वणिग्घिरण्यगुप्तोऽप्यागत्य तदीयभर्तृनिक्षिप्तधनप्रत्यर्पणमामिषमिव व्यपदिश्य सगम तामभ्यर्थयाचक्रे। इतस्तृतीयतिथौ विभावर्याश्चरमप्रहरे ध्रुवं

त्वद्दर्शंवदा भविष्यामि का गतिरिति युक्त्या तमपि विप्रलभ्य व्यस्राक्षीत् तदनन्तरं चेत्थंकार दीर्घरतेभ्य सारमेयेभ्य इव चतुर्भ्यः काममोहितेभ्यो रतिलम्पटेभ्यः कापुरुषेभ्य. कृच्छ्राद् विमोचितस्यात्मनः सङ्कटवृत्तान्तं परिजनविदितं कृत्वा किमपि चिन्तापरा बभूव मन्दभागिनी मेऽमन्दप्रतिभाशालिनी प्रेयसी। अथाविर्भूतेऽह्नि तार्तीयीके प्रदोषसमये प्रदीपान् सर्वान् निर्वाप्य तेषा चतुर्णा कामुकानामागमनायोत्कण्ठमानायामिव सद्मनि मम प्रियतमायां स्थितायां तदधरामृतरसपानलोलुपो युवसचिवो दरचकितेक्षण इव सोत्कण्ठमस्मद्वेश्म प्रविष्टोऽस्नातं त्वा न स्प्रक्ष्यामि मलिने त्वयि कुतो मे सुरतरसो गच्छाभ्यन्तर स्नाहीति तयोक्तं वचनमुररीकृत्य गाढान्धतामिस्रमुषितालोके गर्भगृहे कृतप्रवेशो मूढोऽय परिचारिकाभिर्मलीमसतैलकज्जलमयेनोद्वर्तनेनागेष्वा — मस्तकचरणपर्यन्तं सर्वतः सुचिरमवलिप्य मसीवर्णयातुधानीकृतस्ततो द्वितीयप्रहरे संजाते मन्मथदर्पवशगे द्वितीये कामिनि पुरोधसि यथावत् सोत्मुकमायातेऽसौ मे प्रोषितो भर्ता समायातोऽत्र मञ्जूषायामात्मान निगूहेत्युपकोशया समम्भ्रमं निगद्य तत्राञ्जसा निवेशितोऽभूत्। विधाय द्रुततरं दारुमञ्जूषामर्गलितां सा बुद्धिमतीना वरेण्या मानिनी द्वैतीयीकमनंगकेलिलम्पटं पुमांसं सावहेलमिवावादीन्मलिने त्वद्धर्म्मणि का मे रतिरिति। यथाप्रथमवत्तमपि तथावच्चेटिका विवसनीकृत्य निरन्तरजायमानां जिहासिषामुद्दामा कथ कथमप्यन्तर्निगृह्य मसृणकालमषीतैलमर्दनावलिप्तसर्वांगातिशोभन परातिसंधाननिपुणमनोभवविडम्बिते तार्तीयीकेऽपि पुष्पवजधारिणि प्राड्-

विश्वाके सतृष्णां प्राप्ते सति ध्रुवमस्मत्प्रभु प्रवासात् प्रत्यावृत्तो भवेदिति सहसा व्याहृत्य भीतभीतं तत्र महामञ्जूषायां प्रचिक्षिपु । कथ नाम कच्चरदेहो भूत्वा मां सततस्नानविशुद्धा स्प्रष्टुमर्हसि स्नानं कुर्विति तयोक्त्वा पारिपार्श्विकाभिस्ताभिरयमपि नग्नीकृत्य कृष्णतैलकज्जलैरतिघोरदर्शनकौणपसोदरता प्रापितस्तस्मिन्नेव क्षणे पश्चिमयामे संवृत्ते वणिजि दण्डायमानमेहनधारिणि हिरण्यगुप्ते साकाक्ष प्रादुर्भूते गृहाधिपागमनव्याजेन तत्रैव महति कोशे गोलकवज्झटिति भयाकुलाकुलं प्राक्षेप्यत । एवकारमेकत्रैकसार्थं सुदृढदत्तलोहार्गलायां बृहन्मञ्जूषायां निक्षिप्तेषु जीवितसंशयगतेष्विवातिभयकरभीतिग्रस्तेष्वेतेषु तूष्णीं शृण्वत्सु नराधमेषु हे मन्मनोमोहिनि सुभ्रु मा प्रकाम रमयेति वदन्तं हिरण्यगुप्तं प्राह मनस्विनी मद्भर्त्रा निक्षिप्तं गृहव्ययार्थं धनं मे देहीति श्रुत्वा निक्षेपरूप युष्मदीय हिरण्यं मयि वर्ततेऽयि चारुहासिनि पूर्वं भजस्व मां पश्चात्तद्धिरण्यं ते प्रत्यर्पयिष्यामीत्यालपति तस्मिन् सा मदेकभार्या पुनरत्युच्चैर्भो गृहदेवताः शृणुत यूयमस्य हिरण्यगुप्तस्य हस्ते मे धनं वरोवर्तीत्याक्रुश्य सानुनयं स्नानछद्मना तमपि विवस्त्रं मषीतैलावमर्दनैः परिचारिकाभिरतिभीषणाकृतिं दानवसरूप कारयित्वा, प्रभाता शर्वरी द्रुतमपसरेति संतर्जनपूर्वमपहस्तयन्ती विससर्ज । सुरतलोभविडम्बितपूर्वोऽपि केवलमिदानीं दुर्गतिभावितात्मा युगपद्विनष्टपुरुषध्वज इव वर्षधरोऽतिदुर्मनायमानोऽथ मार्गे सकोलाहलं कौलेयकैर्निर्दयं खाद्यमान कांदिशीकोऽदिगम्बरो

ऽपि दिगम्बरः सोऽसौ हिरण्यगुप्तोऽवाङ्मुखीभूय कोऽपि मामुद्वीक्षेतेति यथाशीघ्रं परिदोद्रूयमाणोऽचिरेण दृग्गोचराद् व्यनशत्। अपरेद्यु: प्रातःकाले पारिपार्श्विकाभिरनुगम्यमाना सा पतिव्रता समस्तललनाललामभूता मे जायारत्नमुपकोशा महीभुजो नन्दस्य सार्वजनिकसभास्थानमासाद्य, देव-भर्त्रा मे श्रुतधरेण न्यासीकृत हिरण्यमात्मसात् कृत्वा वणिग्हिरण्यगुप्तो न प्रतियच्छति याचितोऽप्यत्रायुष्मान् देव एव प्रमाणमिति राज्ञे तस्मै व्यजिज्ञपत्। तत्समनन्तरमेव सदसन्निर्णयार्थं भूपेनाकारिते तस्मिन् सार्थवाहे नाहं जाने किंचिदप्यस्या धनमधिकृत्येति तस्या अपमानजवैरनिर्यातनार्थमिव सत्यमपह्नुत्य मृषाभाषिणि मे प्रेयसी बभाषे सन्ति मे निवेशने साक्षिण्यो महामञ्जूषास्था देवता या याथातथ्य यथावृत्तमवश्यमेवात्र विवरिष्यन्तीति। ततो नरेन्द्राज्ञया कृच्छ्रमुल्लङ्घ्य कर्मकरैर्बहुभिरानीय बृहत्या तस्या मञ्जूषाया तत्र सभागृहमध्ये स्थापिताया सर्वेषु सभासत्सु कौतुकात् सावधानं पश्यत्सु हे गृहदेवताः सूनृत वदत यूयमन्यथा मञ्जूषामेना भस्मसात् करोमि ध्रुवमिति तयाक्रुश्य विरतेऽतीव भीषिता मञ्जूषादेवता सकम्प प्रतिभाषिरे भर्त्रा ते हिरण्यगुप्ते न्यासीकृत हिरण्यमस्ति वय त्रय साक्षिणोऽत्र कश्चिदपि न संदेहलव इति। सर्वलोकविस्मापनस्याश्चर्यस्यादृष्टाश्रुतपूर्वस्य साक्षात्कारेण नितान्तविस्मितमनस पारिषदा प्रतिभयदर्शनान् कालयातुधानसोदरास्तान् नग्नानतिदुष्प्रेक्ष्यमलीमसतैलकज्जलोद्वर्तनालघुलिप्तावयवान्

मंजूषामुद्घाट्य बहिराचकृषुः । तस्मिन्नेव क्षणेऽत्युल्बणे सामाजिकाना हाहाधिग्धिक्शब्दोपेते कोलाहले सोपहासनिन्दे निनादिते तया विज्ञप्तोदन्तेन राज्ञा सुनिर्णीतदण्डेम तास्त्रीन् हिरण्यगुप्तसहितान् भृशं निगृह्य पतिदेवता सोपकोशा प्रशंसापात्रीभूता धर्मभगिनीत्वेनानल्पहिरण्यान्वितेन सत्कारेण महता सभाजयाञ्चक्रे । ततोऽहमपि गौरीवल्लभप्रसादाद् व्याकरणस्मृतिं पुनरुपलभ्य प्रमुदितचेता दयितासमागमाय गुरुचर्यायै च सत्वरं द्रुततरगतिः स्वीयं गृहं प्रत्यायासिषम् ।



# (४) योगनन्दमौनपरिहासकथा

वस्तुतोऽचेतनमपि सचेतनमिवासह्यपीडविरहसंतापधूम-केतुधूमोद्गारधूसरितक्षीणालाक मत्समागमोत्कलिकासहस्रमरी-मृद्यमानसुकुमारान्त.करणमिव बहिरपि विच्छाय सहजस्नेहभाजन गृहमासाद्य पीयूषवर्षणकुमुदबान्धवार्धबिम्बपरिष्कृतमौलिभ्राजिष्णुप्रणतवत्सलत्र्यम्बकविश्राणितव्याकरणशास्त्रपुनरनुस्मरणप्रसादसुधारसपानदूरीकृतदूराध्वमार्गजपरिक्लेश परस्परसङ्गमप्रहृष्टमनसा बन्धुसुहृज्जनेन निर्भरसौहृदयार्द्रहृदयोद्गारितबाष्पक्लिन्नयनेन सानन्दं दूरप्रसारितबाहुना समालेलिग्यमानोऽतिवत्सलैकवत्सवदनसंस्पर्शप्रमोदकोटिमारूढयाजस्रोदश्रुवा मात्रा सवात्सल्यं भुजान्तराले कृत्वा शिरसि जेघ्रीयमाणो दुर्भरवियोगक्लेशक्षामक्षामाङ्ग्या कुसुमायुधसुहृद्वसन्तागमेन प्रफुल्लमंजुलपुष्पाननया वल्लर्येव विरहानलसतातप्यमानकोमलहृदयपीडा कथंचित्कथंचिद् भर्तृ पुन.समागमाशाबन्धेन केवलेन सोढ्वा दुर्निवारोत्कलिका-सहस्रे पु नक्तंदिव वर्षागमोत्कया मयूरांगनयेव प्रतिपालितमदीयस-मावर्तनया नून सजीवनपीयूषसारनिस्यन्दकल्पेन चरितार्थस्य मम प्रत्यागमनेन सोच्छ्वास पुष्पिततामरसाननश्रिया पुलकितवपुषा सबाष्पनेत्रया दयितया गाढस्नेहबहुमानपुरस्सर गृहीतचरणोऽह

प्रश्रयणपूर्वं विहितगुरुजनपादोपसंग्रहाभिवादन एकपत्न्या उप-कोशाया सर्वलोकदुर्लभमत्यद्भुत मद्विरहसमये सवृत्तमितिवृत्त-विशेषमश्रौप ततश्चाह मामकीनामेयप्रेमबहुमानपरमभूमिभूतया तया साकमन्योन्यवियोगसमयराशीभूतदुर्विगाहस्नेहामृतरससुस्वादु सहवाससौख्यमनिर्वचनीयं यथातृप्ति सुचिरं निरविक्षम् । तत. कदाचित् सम्यग्निर्व्यूढाविप्लुतब्रह्मचर्याभ्यामवाप्तानवद्यज्ञानविज्ञान-कलापसतुष्टान्तरात्मभ्या निजनिजगेह प्रति समाविवर्तिपुभ्या सब्रह्मचारिभ्यां मया सहिताभ्या व्याडीन्द्रदत्ताभ्यां तच्चरणाभि-वन्दनपुरस्सरं, गुरुपादाना परमपूज्यमहिमशालिना चरणमूले सुचिर सुखोषिता वयमतिमूल्यविद्यानुशिष्टिप्रसाद प्राप्य खलु दुष्टरज्ञानविज्ञानाब्धिपारगतमात्मानं मन्यमाना भवदनुग्रहस्यानृणतां गन्तु समीहामहेऽतोऽत्रभवान् गुरुदक्षिणारूप पारितोषिकमुद्दिश्य ब्रवीत्विति विज्ञप्त आचार्यो वर्षो युष्मभ्य प्राप्स्यमानो जाम्बूनद-मुद्राकोटिलाभ एव मे दक्षिणा भवत्विति सुव्यक्तमाजिज्ञपत् । ऊरीकृत्य गुरोराज्ञा सर्वथा गुरुजनवचसोऽनतिक्रमणीयत्वात् तौ मामवादिष्टामेहि सखे विश्वंभराभर्तुर्नन्दस्य सकाशं गुरुदक्षिणा-निमित्त शातकुम्भकोटिमभ्यर्थयितु यामोऽन्यथा कुतोऽपि सुवर्ण-मियन्मात्रं प्रचुरमुपलब्धु न संभाव्यते यतो भार्या ते पूर्वं तेन धर्मस्वसृत्वेनागीकृता ततोऽसौ क्ष्माभृत् तावकीन श्याल: काञ्चनस्य नवनवतिकोटिनामीश्वरश्च य. स्वीयभगिनीस्नेहात् त्वद्गुणगौर-वाच्च याचिष्यमाण जाम्बूनदकोटिमसंशयमस्मद्धस्ते वितरीष्यति

गुरुपारितोषिकं प्रति कालविप्रकर्षो न कर्तव्योऽस्माभिरितीत्थंकारं संमन्त्र्याथ निश्चितमनसो वयं तस्य भूभर्तु कटक प्रतिष्ठानपुरमयासिष्म । असारे खलु ससारे न किमपि चिरस्थायि वा शाश्वतिक वा वोभवीति, हृदि धृताशापि कदाचिद् विषादेन परिणमति सुखमपि दु:खेन, बलीयो दैवं कथ पुरुषकारेण सर्वदा निवार्यते । तत्रैव प्राप्तमात्रेष्वस्मासु दुर्धर्षनियतिवलात् कृतान्तपाशाकृष्टोऽसौ वसुधाधिप. कीर्तिशेषभगमदिति विषादवार्तामकाण्डवज्राघातप्रतीकाशामनुश्रुत्य विषाददु खाभ्या यथा पौरजानपदाना तथैवास्माकं मन सु युगपन्निषीदत्सु प्रेतदेहप्रवेशनाद्भुतशक्तिमानिन्द्रदत्त· सविमर्शमवोचत् पार्थिवस्य व्यपेतासोर्नन्दस्य केवलमेकवासरसंजीवनायैव परित्यक्तस्वीयवपुरहमिदानी प्रतिश्रुतगुरुदक्षिणार्जनोपायाभावात्तदीयकलेवरं प्रविशाम्यतो व्याडिर्दिनमेकं रहसि सुरक्षितं मे विग्रहमनन्यमना भूत्वा सावधानमवतु भिक्षार्थी श्रुतधरस्तु मामुपतिष्ठतामस्मा अहं गुरवे प्रतिश्रुत सुवर्णं विश्राणयिष्यामीति व्यक्त व्याहृत्य मातरिश्वेव मक्षु योगप्रभावमास्थाय भूमिपालस्य निष्प्राणं निष्प्रभ काय न्यविक्षत् । अथ सहसा सुप्तप्रबुद्ध इव सह प्राणैरुत्तिष्ठति तस्मिन् मेदिनीनीथे पुन सनाथमिव राष्ट्रं प्रहृष्टाबालनिखिलपौरजानपदस्वेच्छविधीयमानतौर्यत्रिकप्रयोगप्रमुखतदवसरयोग्यसामग्रीसमुपेतानन्दमयमहोत्सवतत्पर समजनि । तस्मिन्नवसरे गूढस्थाने क्वचिदैन्द्रदत्तं निश्चल शरीर रक्षितु मित्र व्याडिं स्थाप्य ततो राजकुलमुपेत्य मयाभ्यर्थितो

दक्षिणार्थं हिरण्यं स कूटराज इन्द्रदत्तो नन्दकलेवरस्थः समीपवर्तिनं शकटालसमाख्य प्रधानमन्त्रिणमस्मै धनार्थिने वररुचये चामीकरमुद्राकोटिं संप्रति समर्प्यतामिति समादिक्षत् । आयुष्मतो देवस्याज्ञप्तिं मूर्ध्नि धृत्वाधुना मया जातरूपकोटिः प्रदीयते विप्रवरायेति प्रोच्य कुशाग्रबुद्धिमान् सुधी. शकटालो, व्यपेतप्राणस्य पुनरुज्जीवनं युगपत् तर्कातीतसुवर्णकोटियाचकस्य राजकुलागमनं च निर्वर्ण्य मनसि सशङ्कं व्यचीचरत् कोऽपि योगसिद्धिमान् प्रभूतकनकापहरणार्थं कूटनीतिमुपयुज्य राज्ञो वर्ष्मणि सद्यःकृतस्थितिर्नूनं स्यात् तथापीदृगवस्थोऽपि नन्दस्य विग्रहोऽस्माभी रक्षणीयो युवराजेऽधुनापि बाल्यस्थेऽव्यवहारज्ञे राज्येऽपि नानाविधामित्राक्रमणसंशयवर्तिनि सतीति तदनन्तरं चासौ राजनीतिकुशलो राष्ट्रधुरधरो विदग्धसाधिविग्रहिकाग्रणीः प्रणिधिभिर्बहुभिः प्रेतकलेवरान् सर्वत्र सूक्ष्मदृष्टिभिरन्विष्य हवींषीव प्रज्वलितेषु हुतभुक्ष्वशेषतः प्रक्षिप्य भस्मसादचीकरत् । गतासुसंहननगवेषणातत्पराणां गृध्रनेत्रवद्दूरदर्शिदृष्टिभाजामपसर्पाणां दृग्गोचरे दौर्भाग्यान्निपतितं तत शीघ्रं कथावशेषीकृतं नृपविग्रहजुष इन्द्रदत्तस्य कलेवरं प्रति का कथा प्रेतशवानां संख्यातीताना करालो दाहो जनमेजयस्य महासर्पयज्ञ इव ध्रुवमदृश्यत तस्य नीरन्ध्रधूमोद्गमेन सर्वतः सछन्नमन्तरिक्षं वर्षाकालीनगजरूपवारिवाहसंदोहावृतमिव दुर्दिनायते स्म । अहो अहह अब्रह्मण्यमब्रह्मण्यमव्यपेतप्राणस्य समाधिस्थस्य ब्राह्मणस्य कलेवरं तत्र

गवेषयित्वा निवारयन्तमपि मां कण्ठेग्राहमपसार्य कुरणपोऽयं निर्जीव इरयाकृष्य राजपुरषा झटिति प्रजाज्वलयमाने जातवेदसि न्यस्या-दाक्षुरिति प्रमुक्तकण्ठं रोरुद्यमानो राजकुलमागत्य व्याडिः कपट-नन्दाय सविषादं व्यजिज्ञपत् । तदकाण्डकुलिशनिभं कर्णे कृत्वा शतधा सहस्रधा विदीर्यमाणहृदय इव तत्क्षणं दारुमय इव निश्चल उत्क्रान्तासुरिव शवो मोहाज्जडीभूतगात्रोऽह्नाय भूतले निपतितो नन्दविग्रहान्तर्गत इन्द्रदत्त [कथचिदावाभ्यां समुच्छ्वासित उत्थाय सुदीर्घमुच्छ्वस्य, दग्धोऽस्मि निष्करुणेन शकटालेन ग्रहहा दग्ध-भाग्यविप्लुष्टोऽह दग्धोस्मि कष्टमहो कमिह शरणमशरणो यामि कमाश्रयमाश्रयेऽनाश्रयः कथ वा प्रशस्तब्राह्मणगोत्रोद्भवोऽपि सन् शूद्रस्य नन्दस्य संहननेऽत्रात्मान धारयामीति प्रकृतिमापन्नो मुक्त-कण्ठमाचक्रन्दद् गाढनिर्वेदसागरनिमग्न. । समाश्वसिहि सखे समा-श्वसिहि किमन्यदित्थंभूते करणीय भवेदिह लोके मानुषजन्म सुदुर्लभ ततोऽपि दुर्लभतरं राज्यमिति मनसा कृत्वा सत्यनन्दस्य शरीरमास्थाय सौभाग्यवशाद् दिष्ट्योपनतस्य चतुरङ्गबलादि-विविधोपस्करसमन्वितस्य परमसमृद्धिमतो राज्यस्य धुरमुद्वहन् त्वमनुत्तमं सपत्संभोगमनुभवेत्यादिना तत्कालोचितमधुरसान्त्व-नान्वितेन वाक्येन शनैः शनैः शोकाब्धिनिमग्न त समुद्धृत्य ततस्त-त्प्रार्थनया मतिसचिवपदं स्वीकृत्य व्याडिरह च तेन योगनन्देन सार्धं सत्यनन्दस्य राज्यधुरं महतीमुद्वहन्तौ सुखमासिष्वहि । अथ प्रचरति काले यथार्हप्रजानुग्रहनिग्रहविवेकदृश्वभिर्यथामसधि-

विग्रहविधानकुशलै. सर्वास्ववस्थासु यथायोग्यं प्रयुज्यमानराजनीति-मर्मविद्भिरस्माभि. सहतैर्यथाशक्ति गरीयसो राज्यभारस्य समूढत्वात् सुदृढीभूतराज्यमूलोऽपि कपटनन्द सत्यनन्दशरीरान्तर्गत इन्द्रदत्तो विद्रोहशकाग्रस्तमना मन्त्रिणं शकटाल प्रति निजदेहदाहजनितवैरनिर्यातनोपायान् विविधाननिशं निदध्यौ ततश्चावसरे प्राप्तकाले शकटालोऽसौ त्वयि दृढबद्धवैरस्त्वद्विध्वसोन्मुखो जातु त्वामामूल निपात्य नन्दस्य तनूजं बालं सिंहासनमारोपयिष्यति नि सशयं यत. सततोत्थानशीलो भूत्वा कदाचिदपि राज्यकण्टकेऽस्मिन् विश्वासगन्धमपि मा स्म कार्षीः कर्हिचिदपि किंचिदपि स्वरन्ध्रमस्मै मा दीदृशः काले कण्टकोद्धरणमेव चिन्तयेति मन्मुखादुदीरितं मन्त्रमोमिति स्वीकृत्य प्रज्ञाचक्षुषं धृतराष्ट्रमिव पुत्रशतोपेतं तं शकटालं लोहशृंखलाबद्धचरणमनुत्क्रान्तासुविप्रोऽनेन प्लुष्ट इति ब्रह्महत्यामुद्घोषयन् भयानकनरककुण्डनिभेऽन्धकूपे प्राक्षैप्सीत् । ततः शकटालः प्रतिदिन केवलं वारिसहितानां सक्तूनां वर्धमानकमेकमेकपुरुषाशनेऽप्यपर्याप्तं योगनन्देन तत्रान्धकूपे निधीयमानं सनिर्वेदं दर्शं दर्शं स्वयमभुक्त्वा चापत्यशतमवोचदसशयमस्मान् सर्वान् बुभुक्षया परिमृद्य काले यमसदनं प्रापयितुकामेन दुर्बुद्धिना नरापसदेन योगनन्देनैव केवल सजलसक्तुशरावः प्रतिवासरं वारमेक दीयते भो. पुत्रका येनैकोऽपि जीवनवृत्ति कल्पयितुं किल न शक्नुयात् किं पुनर्वयं सर्वे तस्माद्युष्मासु यो यो योगनन्दं प्रति वैरनिर्यातनं कदापि कर्तुं समर्थ स एकल

एव प्रतिदिवसमनेन सवारिणा भक्ष्येण कृच्छ्रवृत्तिमपि कल्पयत्विति। अत्यन्तपितृभक्तास्ते शत्रुप्रतिक्रियातृषिता प्रत्यूचुर्न कोऽप्यस्मासु रिपु प्रतिकर्तुं शक्त उत्साहसंपन्नोऽस्ति पितस्त्वमेव द्विषतपोऽस्मच्छत्रुप्रतीकारे प्रभविष्णुर्भुंक्ष्व सक्तून् वारिणा सहेति। यथात्मजा सर्वेऽसहनीयक्षुत्पिपासार्दिता अनशनतनूकृततनुस्का. प्राणोत्क्रमणयातनाभि. परिमरीमृद्यमाना निपेतुस्तथा सततमात्मन सपद लिप्सुना वेतसी वृत्तिमाश्रित्य प्रभूणां मनोजिघ्रेण भवितव्य पर न जातुचिदपि तेषु चापल्यदोलायमानहृदयेषु प्रभविष्णुषु विश्वास कर्तव्य इति सशोक विचारयाम्बभूव। एवकार कालेन प्रत्यग्रीकृतवैरनिर्यातननिश्चयस्य प्रदीप्तक्रोधाग्निपरिदन्दह्यमानसर्वागस्य युगपदपत्यरत्नशतविनाशतीव्रव्यथाविदेदीर्यमाणहृन्मर्मणो निर्दय दैवहतकमाचोक्रुश्यमानस्य पितु. पश्यतस्तत्र तदीया सुता सर्वे पञ्चता जग्मुः। अत्रान्तरेऽनुत्तमा राष्ट्रसपदमात्मीकृत्यातर्कितोत्पन्नाभिनवलक्ष्मीमदमत्तो विषयासक्तमना योगनन्दो विस्मृतनिजसहजधर्म सन् राज्योत्कर्षहेतुक प्रजायोगक्षेमसाधन राष्ट्रधुरोद्वहन सर्वथोपेक्ष्य मृगयामन्मथक्रीडादिषु निन्द्येषु व्यसनेषु रतिं दुर्वारा ववन्ध। ततो व्याडिरपि सम्यक्समर्पितगुरुदक्षिण समारे क्लेशावहे वैराग्य गच्छन् राजानमुपेत्य सोऽहमद्यप्रभृति यत्रसायगृहोऽतिवर्णाश्रमी भूत्वा कैवल्यसाधनाय यत्रकुत्रापि तपस्तप्तु साधयामि हे राजन् त्वा वररुचिसखमापृच्छे राज्यधुरन्धरस्य तेऽस्तु शिव शाश्वतिकमिति। श्रुत्वा तन्मित्रविश्लेषदु खिनो योग-

नन्दस्तं निवारयन् प्राह राज्यविभूतिभोगसुखान्यनन्तानि मया सार्धं यथातृप्ति निर्विश, चिरंतनं सुहृदं मा वररुचिं च विहाय कुतः कारणान्निर्गन्तु मूढ इव समीहसे मा यासीरिति। न हि मतिमान् बुद्बुदवन्निमेषनश्वरेऽशुचिनिधाने हतकलेवरेऽनुरागं बध्नाति पुनरनर्थकाद् भवसागराद्वैमुख्यं याति तादृग्भूतं प्रज्ञाचक्षुषं नि स्पृहं कथं नाम मृगतृष्णिकेव निं.सारा चञ्चला लक्ष्मीर्विमोहयितु शक्नोतीत्यञ्जसा समुदीर्य तपस्तप्तुं वैरागी व्याडि. क्वापि निरगात्। एवं सुहृदि व्याडावदृश्यतां गते तथोन्मत्तमतंगज इव विशृंखले नृपे योगनन्दे मृगव्यसुरतादिकेलिपूद्दामासु बद्धातिस्नेहे विषयासक्ते सततमुत्पथमनुसरति राजकीयनियोगगौरवात् प्रधानामात्यपदं संप्राप्तेनापि सहायरहितेनैकाकिना मया कथमतिदुष्करविषयप्रशासनकार्याणि निर्वाहयितुं शक्येतेति मनसि विधाय शकटाल विदग्धं सहायं चिकीर्षु. सामाद्युपायशतेन कृच्छ्रेण सत्यनन्दविग्रहवासिनमिन्द्रदत्त राजानं प्रतिबोध्य नरकप्रतीकाशात्तस्मादन्धकूपाच्छकटाल चिराद् व्यमूमुचम्। तत्रान्तरे मदीयपरमभक्तिसंतुष्टा सुरनिम्नगा भीष्मसूर्वरदा भूत्वा सदा जातरूपशतोत्सर्जनेन मा नितरां सस्नेहमन्वग्रहीत्। तत पुनर्निजमन्त्रिपदे स्थापितोऽपि दयितवत्सशतविनाशमन्युपरिपूर्णहृदयकूपः शकटालः स्वप्नेष्वप्यविस्मरणीय सुगाढबद्धमूलमुत्कटविद्वेषं राज्ञ उपरि मनसा धृत्वा केवल प्राप्तकालं सोत्कण्ठ प्रतीक्षाचक्रे। एकदा मध्येगङ्गं संहतमंगुलीपञ्चकं प्रदर्शयन् केवलो हस्तो यदृच्छया-

स्माभिरदर्शि त चावलोक्य किमेतदिति कौतूहलाविष्टमनसा शकटालेन पृष्टोऽहं तमकृत.सभव हस्तं सपदि निजागुलीद्वयप्रदर्शनेन तिरोधाप्य पश्च दूरे तावदासतां द्वावप्येकमत्यस्थौ बलीयसापि न भेद्यौ भवत इत्यवादिषम्। तस्मिन् क्षणे मे रहस्यविज्ञानेन विस्मितेन नृपेण भूयोऽपि पृष्ट प्रत्यवोच यदसौ कर· पचागुली: संदर्शयन् सगतै पंचभि. किं दुष्करमिति रहोऽमुमूचत्, मयापि स्वकीयागुलीद्वयप्रदर्शनेन सहताभ्या द्वाभ्यामपीह जगति किमसाध्यमिति गूढ व्यजितत्वादसौ तिरोभूत । दुर्धर्ष मे प्रज्ञाप्रभावं दृष्ट्वा शकटाले मनसि निषीदति सर्वेऽन्ये योगनन्दपुरस्सरा अतिविस्मितमानसा भृशं समतुषन्। सत्यनन्दविग्रहावसथनिवासिनि विषयासक्तिविस्मृतब्रह्मण्यवृत्तौ ब्रह्मबन्धाविन्द्रदत्तेऽमर्षेर्ष्यावशीकृतचेतसि केवलमाखेटमधुपानानङ्गक्रीडादिषु विषयसंभोगेषु सततं काल मिथ्या यापयति समीरणा अपि तदीयासूयाकोपभयोद्वेजिता इवेर्ष्याकुटिलीकृतमनस. क्रोधालोस्तस्यान्त.पुरे किल न वबुः । अथैकदासौ कोपनोऽसूयक. प्राशुप्रासादपृष्टगतो नक्षत्रयोगप्रश्ने देव्या सह सभाषण कुर्वाण द्विजन्मान कार्तान्तिकमवलोक्यैव दुर्वाररोपेद्धमना सरीसृपकुटिलभ्रूकुटीविकृतवदन ईर्ष्यालु प्रदीप्तामर्षेर्ष्याग्रस्तविवेक सन् योगनन्दस्तस्य मौहूर्तिकस्य विशसन निर्विचारमादिदेश । विकटाक्षान्तिरोपविपविमूढचेतसा ब्राह्मणब्रुवेण भूभुजा समादिष्टे प्राड्विवाकपुरस्सरैरुग्ररूपैराजभृत्यैर्वधभुव नेनीयमाने तस्मिन् वराके विक्रयार्थमापणे स्थापितो मत्स्य

उत्क्रान्तप्राणोऽपि सहसाट्टहासं चकार येन विस्मयातिशयं गतास्ते दण्डवासिकादयः प्रतिनिवृत्य राज्ञे मत्स्याट्टहसितमत्यद्भुतं सत्वर न्यवीविदन्। क्षणान्तरे शङ्काविष्टेन नृपेण मीनहासकारण पृष्टेष्वपि तदभिप्रायाज्ञानात् केवलमाश्चर्यविस्मापितमनःसु शकटालप्रमुखेषु राजवल्लभेषु मूकीभूतेषु मुहूर्त विचारयन्, राजन् विप्रस्य विषूदनक्रौर्यं तावदधुना निषिध्यतां यावच्छ्व प्रभाते युष्माक पुरतो मीनाट्टहासहेतुर्मया व्यक्तीकरिष्यत इत्युक्त्वा सशितात्मा भक्तिनम्रोऽहं बहिर्गत्वा वरदां भागीरथी तदप्राक्षम्। पृष्टा सा भीष्मसूर्मामभ्यभाषिष्ट रात्रावद्य निकटवर्तिन उत्कटतालभूरुहस्य पृष्ठगस्त्व तद्रहस्यमाकर्णयिष्यसीति। अर्धरात्रे तत्र विकटतालवृक्षपृष्ठच्छन्नशरीरोऽह करालाकृतिं स्वैररात्रिचरी प्रतिभयविदारितास्यां कृतान्तस्वसारमिवोर्ध्वकेशी प्रज्वलितभीषणाक्षी शूकरदंष्ट्रादन्तुरा तद्वद्घोररूपानेकराक्षसपुत्रानुगता राक्षसीमद्राक्ष क्षणान्तरे चाश्रौषं हे मातर्बुभुक्षिता. स्म. किंचिदशन देहि भोजनं देहि रे रे पुत्रका काल कंचिद्युष्माभि. प्रतीक्ष्यता योऽद्य राजादेशाज्जिघासितोऽपि मन्त्रिणो वररुचेर्वचसा दिवसमेक परिरक्षितस्तस्यैव ब्राह्मणस्य प्रातर्हनिष्यमाणस्य षण्मासतृप्तिदायीनि रुचिराणि मासशकलानि वो दास्यामि मा स्म शोचिष्ट मात कस्मात् सोऽद्य न हतोऽयि बालकास्तिमिपरिहासहेतोर्हे ग्रम्ब केन कारणेन तिमिना हसित वत्सा. शृणुताकालेर्ष्याकोपविमोहितचेतोवृत्तिर्ब्रह्मबन्धुरसौ देवानांप्रियो राजा सहस्रचारचक्षु-

रपि भूत्वा परपुरुषदूषितं स्वीयमवरोधजनमविदित्वा निष्किल्विष ज्योतिषिकं जिघांसति, पश्यत, स्वान्त पुरे सदा सौविदल्लैर्वर्षवरै-र्बहुभि. सुगोपितेऽपि योषिद्रूपिणो राजललनानां वृषस्यन्तीनां वल्लभास्तरुणा गूढं संचरन्त्येवमवरोधस्थस्त्रीरूपधारिपुरुषसमवा-यवर्जं कथमिव मूर्खेनानपराधो द्विजो निर्दय विशस्यत इति तस्य राज्ञो मूढचेष्टितमुद्दिश्य निर्जीवेनापि मत्स्येन सहाहाकारं तारं हसितमिति तस्या रजनीचर्या राक्षसबालकाना च मध्ये संवृत्तं संभाषणम् । श्रुत्वातिप्रहृष्टेन मया प्रभाते योगनन्दस्यान्तिक-मुपेत्य भो राजन् दैवज्ञमनपराधिनं प्रति निष्कारणं क्रोध मा भाक्षीस्त्वदङ्गना. सर्वा परपुरुषविप्लुता. सुरक्षिते शुद्धन्ते स्त्रीवेष-धारिणोऽनिश देवीभो रममाणा युवान सुखमासत इति विबोधि-तमत्स्यहासयाथातथ्यो योगनन्द किमपि लज्जित इव ध्यात्वा तान् सर्वानजातश्मश्रून् योषिद्रूपान् सर्वेणावरोधजनेन सा॰ तीक्ष्णेन दण्डपातेन दण्डयाम्बभूव ।



# (५) वररुचिशापमुक्तिकथा

ततः कदाचित् कार्याकार्याविवेकिनि सततोत्पथप्रतिपन्ने पापात्मनि महीक्षिति सार्वजनिकसभामण्डपगते तदनुमत्या कृतप्रवेशश्चित्रविद्यापारदृश्वा निसर्गसुभगप्रतिमावर्णनातिनिपुणहस्तकौशल्यशाली कश्चिच्चित्रकारकुञ्जरो वल्लभाद्वितीयस्य तस्य प्रतिमा निर्मले दर्पणतले प्रतिबिम्बितां छायामिव तत्त्वतः सादृश्यगुणान्वितां चित्रपटे निर्ममे। अथैकदाऽद्भुतचित्रार्पिता वाग्व्यापारविनाकृतामपि सजीवामिव भ्रान्तिकरीं जायासखस्य क्ष्माभृतः प्रतिमापटे नवीनावरोधवासगृहभित्तिन्यस्ते परिपूर्णलक्षणसाम्यगुणसमुपेतां तस्याकृतिं निर्दोषामवलोक्य रूपसौन्दर्यादिसमस्तगुणसंवादिनीमपीषन्न्यूनां महिष्याः प्रतिच्छायां वीतकलङ्कां पौर्णमासीमिन्दुकलामिव निरीक्ष्यमाणां दर्शं दर्शं सूक्ष्मदेहावयवलक्षणान्तरोहापोहानुमानतोऽसंपूर्णलक्षणां मामन्यमानोऽहं नैसर्गिकशेमुषीपारवश्यात्तस्या गोप्यस्थाने मयादृष्टपूर्वमपि तिलकरूपं लाञ्छनं न्यवीविशं ततश्च शशलाञ्छनेन परिपूर्णप्रकृतिशोभं कुमुदबान्धवबिम्बमिव तन्नैव तिलकचिह्नेन निष्पादितसम्पूर्णलावण्यलक्षणानुगतं देव्याः प्रतिबिम्बं विस्तरशः सपरीक्ष्य योगनन्द ईर्ष्यामर्षोपहततितिक्षः केनेदमनन्यविदित

लक्षणमस्या गुह्यप्रदेशे स्फुटं निवेशितमित्यतिवेलं चुक्रोध तत्संनि-कर्षवर्तिना षण्डसौविदल्लेन देव तिलकलक्ष्मेदमायुष्मतो देवस्य महामन्त्रिणा वररुचिना स्वयमलेखीति विज्ञप्ते यदिदं तस्याः सहज गुह्यदेशोपकण्ठवर्ति तिलकलक्षणं मदन्यो न कोऽपि जानीते न केनापि साक्षात्कृतपूर्वं तद् वररुचि कथमिव वेत्ति कथंकारमेतत्तस्य ज्ञानगोचरे निपतितं नूनमनेन मदीयावरोधस्त्रीजन उपांशु संदूषित स्यादेतस्मात् प्रच्छन्नान्त पुरसंचारिणा परकलत्राभिगमनशीलेन निकृष्टपारदारिकेण योषिद्दूषिणा आत्मानुरूपास्ते परदारिणोऽपि सुविदितपूर्वा असशयं दुर्दमनेर्ष्यावशान्मे निग्रहार्थं प्रकटीकृता भवेयुरिति मिथ्या परामृश्य सर्पिषा प्रज्वलितज्वालाजिह्वो हुतभुगिव सासूयेनोद्दामेन प्रकोपेण परमतो जाज्वल्यमानोऽसौ मेदिनीभर्ता योगनन्दो झगिति मन्त्रिणं शकटालं समाहूय देवीतल्पगो दुरात्मा कात्यायनोऽविलम्बितमेव विशस्यतामिति सभ्रूभङ्गजर्जरितानन तीव्रकुलिशाघातनिर्घोषवदुच्चैस्तरामाचुक्रोश। इति करालाशनिसंपातसंनिभ दुर्ललितं निर्विचारं दारुणवाक्प्रतोदं साकम्पं निशम्य शकटालो यथायुष्मान् देव आज्ञापयसि तथाज्ञाविधेयेन भृत्येनानेन द्रुत करिष्यत इति निगद्य निर्ययौ कथं नाम ममोपकारी सुहृद्वरः श्रुतधरो निष्करुणेन कृतघ्नेन मया हनिष्यते योऽसह्यपीडापत्स्थं पापात्मना नरापसदेन कपटनन्देनापमानितं मां निर्वेदनैराश्यान्धतामिस्रावगुण्ठितालोकाद् रौद्रनरककुण्डसंकाशात् तस्मादन्धकूपात् समुददीधरद्, यद्यपि वररुचिवधे मे

सामर्थ्यमभविष्यत्तथापि तं मदीयपरमाश्रयभूत मामकीनायुष्प्रदं नाहनिष्यं किं पुनरतिमानुषप्रतिभाशक्तिमन्तं सद्योऽपकारिणं विध्वंसयितु समर्थं हन्तु शक्नुयां परन्त्वल्पबुद्धिना मया निस्त्रिंशस्य नृपाधमस्य वचोऽङ्गीकृतमत्र किं कुर्यामथवा कृत विचिकित्सयेत्येवं च सुतरां परामृश्य द्रुततरगतिर्गृहस्थितं मामुपसृत्य मन्निपूदनोदर्क राज्ञोऽमर्षहेतु निवेद्य स्पष्टवागुच्चारणपुरस्सर व्याहार्षीन्निर्मर्यादेर्ष्यारोषविषानलान्धीभूतबुद्धिना भूपालाधमेन सर्वलोकपरिजुगुप्सिताचारेण योगनन्देन निजप्रमदाप्रतिमागुह्यप्रदेशे लक्ष्मकारिणस्तव निबर्हणे निष्कृपमादिष्टेऽपि कथमिवोपकारिणः स्तेऽपचारीवापकुर्वीय कथ वा परित्रातार त्वां वै सर्वान्तिकस्यान्तकस्य हस्ते निस्त्रपो नरकीट इव परित्यजेयं लोकपरीवादाय किः प्रभुविडम्बनाय च महापातकिनं कमपि त्वत्स्थाने पुरा निपूदयाम्यः तो निश्चितेन त्वया मदीयावसथे विहितवसतिना कचन कालं निभृतमेव स्थीयतां किं न पश्यसि, कुमन्त्रकुवृत्तिकलङ्कितमनोदर्पणः कुशीलो नृपहतको निर्विचारः पतंग इव वह्निमुखे दुर्नयवागुरायां स्वयं निपतन् नि सशय विनाशमेष्यति, यथावकाशषाड्गुण्यप्रयोगकुशलसुशिक्षितमन्त्रिविवर्जिता राज्यलक्ष्मी कर्णधारणकोविदकर्णधारविहीना नौरिवाकूपारे समुद्रे कथं न विप्लवेत त्वया सुनीतिज्ञेन विनाकृतोऽय योगनन्दोऽपि तादृगवस्था दुर्गतिं नून गमिष्यति नन्वनुश्रूयतेऽविचारकारिण आदित्यवर्मनाम्नो भूभर्तुरुदाहरणमपीति तदनन्तर च स्ववासगृहे सुरक्षित सुखोषितं

मा विधाय कृतागसं मलिम्लुचं निहत्य चायुष्मन् देवाज्ञाया अनुल्लङ्घनीयत्वाद् राज्यनौकाकर्णधारो वररुचिः सांप्रतं न्यसूद्यतेति कुनृपाय मृषा न्यवीविदत् । अथ क्षणान्तरे राष्ट्रधुरंधरः श्रुतधरो महौजा उदारधीर्नरेश्वरापवादेन यज्ञपशुमारं मारित इति समन्ततो वितेस्तीर्यमाणे ग्रैष्मिकदावाग्नाविव लोकप्रवादे सर्वतोऽञ्जसा कर्णकर्णि शोश्रूयमाणे निरन्तरपरहितनिरतोऽस्मन्निष्कारणबन्धुः किमर्थं निहतस्तेन सजीवेनाद्यपूर्वं सनाथा वयं खल्वभूमाद्यप्रभृति तु राष्ट्रधुर्यग्रेसरेण महामात्यपुंगवेन विनाकृता अनाथीभूता. परं योऽकारणप्रकोपविमूढचेता राज्यनौनाविकोत्तमं वररुचिं विनाशपारावारे सहेलं न्यममज्जत् सोऽपि नचिरात्तत्रैव ध्रुवं निमंक्षति, हा शांतं पापं शान्तं पापं तथाभूतस्य करुणानिधेर्बुद्धिमतां वरस्य पुण्यश्लोकस्य महामन्त्रिणः क्रूरनिस्तर्हणमयशस्करं किमिति तत्कर्तुर्नरकवासाय न कल्पत इति तत्रत्या. सर्वे पौरजानपदा अतर्कितशनकोटिनिर्घातोन्मूलिता भूरुहा इव भुवि निपत्य भृशमभिशुशुचु । तस्यामेव निशीथिन्यां तद्वेश्मनि रहः कृतस्थितिरहं मम कृतेन राजातिसंधानोपाय तस्करमारणेन प्रयुज्य मा परिश्रातवन्तं तं शकटाल प्रीतिपूर्वकमवादिपं हे सखे कृतज्ञोऽस्मि तवोपकारेण ननु पूर्वोपकारिणो मे त्वमपि बुद्धि-पूर्वं युक्तिन उपाकार्षीर्यतो दुरात्मन. कामवशवदस्य राज्ञो दुश्शासनं शासनं सुष्ठु न्यक्कृत्य मम विशसनं न्यवीवरो येनाद्यप्रभृति मे विश्रम्भपात्रं जगतीह सुदुर्लभं मित्रं संभूतोऽसि,

विश्वासभाजनीभूते त्वयि किमित्यात्मनो रहस्यं न प्रकटीकरोमि देहि कर्णं ब्रुवाणस्य मे वाक्येऽस्ति बलिष्ठं मेऽपर मित्र सर्वलोकचमत्कारक्षम यदीयेन सर्वजीवान्तककल्पेन सर्वकपेण वीर्येण कोऽपि मदीयान् प्राणवायून् निर्वापयितु न खलु शक्नोतीति श्रुत्वा मद्वचो दरविस्मितमनसि शकटाले कोऽसौ ते सुहृत् कुत्रत्य' किंनामा किंव्यापार. कथंवीर्यः कीदृग्रूप इति मामनुयुञ्जाने स्मृतमात्रप्रादुर्भूतं दरतिमिरघोरं महाकालकायं प्रदीप्तविद्युन्नेत्रभीषणमूर्ध्वकेशविततास्यकुहर रौद्राकृतिं क्रव्याद कौणप तस्मै चकितचकिताय प्रादीदृशम्। तद्दर्शनादतीवोद्विग्नवित्रस्त. शकटालो मदिच्छानुसारेण तस्मिन् कुणपभोजने रक्षसि झटिति तिरोहितेऽतिविस्मयकौतूहलाविष्टमना मामप्राक्षीत् कथं सोऽसौ महाकाल इव महारौद्रो राक्षसस्तव मित्रेण परिणत इत्येवं तेनानुयुक्तोऽहं प्रत्यभाषिषि यदि मनसि ते विविदिषा श्रूयता यदा मपुत्रशतस्त्वं नरकयातनामिवातिदुस्सहा व्यथामनुभवन् निरयकुण्डतुल्येऽन्धकूपे सदानितोभूस्तदा प्रतिरात्र पुराध्यक्षो नगरपरिरक्षणार्थं परिबभ्रम्यमाण एकैकश केनापि कारणेन विलय ययौ प्रवृत्तिमीदृशीमद्भुतामुपलभ्य योगनन्द एकदा मां पुराध्यक्षपदेऽध्यतिष्ठपत् ततोऽर्धरात्रेऽहमकुतोभयो निशितचन्द्रहासद्वितीयो नीरन्ध्रतमोमुषितालोकाया पुरीतस्तत. परिचञ्चूर्यमाणो नरामिषजिघृक्षयाटाट्यमान महाघोराकार रक्षोऽवालोकिषि तस्मिन्नेव क्षणे सोऽपि पिशितप्रियो राक्षसो मा निरीक्ष्य सहसा गलेग्राह गृहीत्वा प्रति-

भयाट्टहासपूर्वकमवादीद् यदि मम प्रश्नमस्खलितमुत्तरेस्तर्हि त्वा मुञ्चेय वद केह पुटभेदनेऽनुत्तमरूपसौन्दर्यशालिनी वरवर्णिनीति। हे मूढ क्व तादृशी प्रमदा भवेत् तथापि ब्रवीमि या यस्यैव बहुमता सैव तस्य सर्वश्रेष्ठललनाललाम वरीवर्तीति तत्कालोत्पन्नप्रतिभानवशान्मया प्रोक्ते न केनाप्यपरेण पराजितपूर्वोऽपीदानीं खलु त्वयैव निर्जितोऽस्मि भवत्वद्यप्रभृति सुदृढ आवयोर्मैत्रीसम्बन्धस्त्वया च ध्यातमात्रेण यत्र क्वापि त्वदर्थे समुपस्थास्ये त्वन्मित्रमहमिति प्राप्तकालेन प्रश्नोत्तरदानेन जीवित-संशयोत्तीर्णं मामुक्त्वा स यातुधानो दृष्टिगोचरान्मे तिरोऽधात् तत. प्रभृति चासौ मत्साहाय्यतत्पर आपत्सुहृत् सकटसहायश्चाभूत्। इति मन्मुखाच्छ्रुत्वा शकटालो भूयो मामभ्यभाषिष्ट कथं तर्हि रक्षोमित्रेणामुनास्मदपकारिणं निन्द्यकुकर्माण भूपतिं मारयितु नोत्सहस इति। न स्वय हन्मि न परहस्तेनापि घातयामि तं नृपाधमं य परमार्थत सर्वजनजुगुप्सितोन्मार्गानुसारी किंप्रभुरपि जन्मना ब्राह्मण इन्द्रदत्तो मे चिरकालीनसहायो बोभोतीति कथाप्रसगे शकटालमादित्यवर्मवृत्तान्तमप्राक्षम्। पृष्टेन तेनेत्यवादि पुरा बभूव महीभुगादित्यवर्माभिधस्तस्यैकतमा भार्या स्वैरवतीनाम्नी स्वैरिणी च बभूव। अथ सा स्वैरिणी वर्षद्वयमननुभूतभर्तृसगमापि किलापन्नसत्त्वा सववृते तथाभूता च पुंश्चली विदित्वा सौविदल्लान् वर्षवरान् वीतव्रीडायास्तस्या गर्भाधानहेतुं पप्रच्छ स्वैरवत्या अन्त पुरशय्यागृहे विहितप्रवेशस्य मे द्वौ संवत्सरौ

व्यतीतौ तथापि कथमिव भ्रूणसभवोऽस्यामिति । श्रुत्वा तस्य सदेहवचस्ते प्रतिवभाषिरे पुसा प्रवेशस्य सर्वथा निषिद्धत्वादत्र न कोऽपि प्रवेष्टु शक्नोति महामात्य शिववर्माणं वर्जयित्वेति । मन्येऽमुना परकलत्राभिगामिना विदूषितशीला स्वैरिणी संगता स्यादिति शिववर्माणमाशङ्कमानो राजादित्यवर्मा प्रकाशवधेऽपवाद संजायेतात एव तस्योपाशुवध एवानिष्टलोकपरीवादपरिहाराय प्राप्तरूप इति विमृश्य किमपि कार्यं व्यपदिश्य निजसख्युर्भोगवर्मसज्ञस्यानुजीविसामन्तस्याभ्यर्णं तं प्रेष्य तदनुपदमेव तस्य निगूढनिषूदनसदेशहर दूतं तत्र रहसि विससर्ज । अथ संप्राप्य भोगवर्मण सन्निकर्ष किमपि सदिग्धचेता मतिमता वर शिववर्मा ध्यात्वा प्रच्छन्नसंदेशहरानीतलेखनिर्दिष्टमात्मनो निग्रन्थनं बुद्ध्वा च सामन्त निर्भयमुवाद हे राजन् क्षिप्रं जहि मा संततभर्तृकल्याणैषिणमन्यथा स्वहस्तेनात्मानं हन्मि यत्र जनपदेऽन्येन बलात्कारेण पञ्चता प्रापितो भवेयं चेत् तत्र प्रजाना सर्वासां क्षुत्पिपासाजननी दारुणानावृष्टि संपद्येतेति । श्रावं श्राव तद्वाक्यं मुहुरुदीरितं भोगवर्मा मन्त्रिभि संमन्त्र्य तं महामतिं पुनर्निजनगरीमजीगमत् तत्रान्तरे चान्तपुरे नारीवेषधारिणं स्वैरिण्याः प्रच्छन्नोपपतिं विदित्वा तया पांसुलया गर्भिण्या साकं त पाप जारं यथावन्निगृह्य सदाचारभूषणस्य राज्यभारधुरीणानां पुरोगस्य शिववर्मण उपांशुदण्डाय विसर्जनेन मूर्खेन क्षुद्रबुद्धिना मया प्रवाहेमूत्रितमेवेत्यनुतापसंतप्तान्तकरण आदित्यवर्मा विप्रतीसारेण

दु खितो बभूवेति तस्येतिवृत्तकथनावसाने शकटालो मामवादी-दादित्यवमेवद् योगनन्दोऽपि ध्रुवमचिरेण तव विशुद्धिमवगमिष्यति तावन्निश्चितेन वीतमन्युज्वरेण त्वया समय कंचिन्ममावसथे प्रच्छन्नरूपेण यथासुखमुष्यतामन्यच्च मनसि मे कौतुकं विद्यते कथ्यतां पूर्वमस्माभिर्मध्येगङ्गमगुलीपञ्चकं पिशुनयन्तं यः करः साक्षात्कृतः स कस्येति । इति श्रुत्वाह तस्मै कौतूहलाश्चर्यस्फीत-मनसे वत्सवत्सला मातरमिव मयि भक्तिप्रणते स्निह्यन्ती दिव्य-योषिद्वपुष्मती पीयूषधाराप्रतीकाशदृष्टिपातप्रसाद वर्षन्ती मदीय-निदिध्यासनात् साक्षादाविर्भूता भागीरथीमदीदृशम् । अथ कालः क्रमेण योगनन्दस्य तनूद्भवो हरिगुप्तो मृगयाविहारी मृगव्यवशाद् गहने कान्तारे मनोजवतुरङ्गमारूढ. कृष्णसारादिभिर्विविधवन्य-चतुष्पाद्भिराचरीकृष्यमाणः सुदूरं प्रययौ ततश्च दैवदुर्विपाका-द्विनष्टमार्गो यथागत निर्यातुकाम इतस्ततो निर्गमनमार्ग गवेषयन् दुर्गमे गहने परिबभ्राम । एवकारं समीरणवेगेन वाजिना पर्युह्य-माणस्य राजपुत्रस्य सुमहति कालेऽतिक्रान्ते प्रदोप. समवर्तिष्ट । गत्यन्तराभावात् तत्रैव वनें त्रियामपरिमितामपि यामशतायमाना त्रियामा कथचित् क्षपयितु हिंसारुजिहीर्षया प्राशुतमालवृक्षमारुह्य निभृतमासीने क्रूरमृगेश्वरभीपितो भल्लूकस्तमेव भूरुह द्रुत समा-रुह्य चित्रस्त राजसूनु व्याजहार मा भैषी सखे घातकेन रौद्र-कण्ठीरवेणाभिद्रुतोऽह त्वमिवास्मिञ्शाखिनि गृहीतशरणोऽस्म्यभय ते ददामि पश्य तरुमूलेऽधस्तादायातोऽय पिशिताशन ऊर्ध्वकेसर-

सटक्कतभीषणशिरोवेष्टन आकर्णविदारितविकटास्यदर्शितनिशातदंष्ट्रः केसरी निशितकुठारैरिवातितीक्ष्णैर्नखरैरिमं महीरुहं ताडयन् प्रदीप्तज्वालानिभैश्चण्डलोचनरश्मिभिरन्धतमसमून्मूलयन्निव कठोरभिदुरनिर्घातनिर्घोषेणेव कण्ठरवेण नैशशान्तिं संक्षोभयन्नास्ते त्रियामाया पूर्वार्धं स्वपिहि मयातन्द्रितेन पायमानस्तत. क्रमेणापरार्धं निद्रामि प्रबुद्धेन त्वया परिपाल्यमान इति। तथा कुर्व इति प्रतिश्रुत्य मिथ समयाद्राजपुत्रे निद्रां भजमाने भो भो. सखेऽच्छभल्ल मन्ये निद्रितोऽय मनुजो मदर्थेऽधः प्रक्षिप्यतामेनं रुचिरमांसमासलमुदरपूरं भुक्त्वा तृप्तोऽन्यतो गमिष्यामीति बुभुक्षितेन मृगरिपुणा सिंहेनाभ्यर्थितेऽरेऽरे कण्ठीरव त्व समस्तवनेचराधीश्वरोऽपि भूत्वा सत्त्वसंपन्नोऽपि निःसत्त्व इव वीर्यवानपि निर्वीय इव कथं नाम प्रसुप्तं कूटनीत्या जिघांससि रे रे कण्ठीरव तव श्रवणकटु कण्ठीरवो मेघनाद इव श्रूयमाणोऽपि सत्त्वोत्साहविहीन ऋजुहृदयाना मृगाणा विभीषिकैव भवति नाहं परस्परसंविदा मित्रीभूतं सुखसुप्तमिमं परित्यजामि शृणु सुहृद्भेदिनोऽहंयोः कल्मषं जन्मशततपश्चर्ययापि न परिमृज्यते खलु हे पञ्चास्य नखरायुध न खलु न खलु पशुराजभूतेन त्वयारण्येरुदितं कार्यमिति व्यक्तं व्याहृत्य सत्त्वसंपन्नः सरलहृदयो भल्लूको हरिगुप्ते सुप्तोत्थिते यथासमयं क्रमान्निदद्रौ। भो मानव त्व मित्रं मेऽसि मत्सकाशादभयं संप्रति प्राप्नुहि विश्वस्तो भूत्वैनमृक्षमामिषं मे देहीति पञ्चनखेनोक्ते तत्प्रसादनायात्मदेहरिरक्षिषया दुरात्मा

हरिगुप्तो विश्रब्धं सुखशयितं वीताशङ्कं तमृक्षमधो न्यपीपतत् । इत्थंकारमेकपदे मित्रद्रोहिणा तेन नराधमेन प्रक्षिप्तोऽपि सोऽच्छभल्लः सर्वेणात्मनो वीर्यबलेन रुधिरोद्गारिभिर्नखरैर्वृक्षस्कन्धमवष्टभ्य मृत्युमुखोत्तीर्णो निर्लज्जाहङ्कारसंदूषितं राजपुत्रापसदं सरोषमभिशशाप दुरात्मन् मनुजराक्षस त्वमुन्मत्तो भव यदा कोऽपीमं मित्रद्रोहवृत्तान्तमुन्मदिष्णोस्ते पुरतः प्रकटयिष्यति तदा त्वं प्रकृतिस्थो भविष्यसीति शापावधिमपि प्रददौ । अथ सूर्योदये राजधानीमासाद्य हरिगुप्त उन्मादविकलो निष्प्रभ संजज्ञे तं च तथाभूतं हृदयशूलकल्पमात्मजं सनिर्वेदं दर्शं दर्शं पुत्रापदापन्नः किंकर्तव्यताविनष्टधीः किमपि सखेदं स्मारं स्मारं योगनन्द इति निजगाद यदि प्रकृष्टप्रज्ञाविभूतिसंपन्नो वररुचिरिदानीमजीविष्यद् युवराजस्योन्मादनिदानं सम्यग् ज्ञात्वा प्राप्तकालां प्रतिक्रिया निःसंशयमकरिष्यद्धन्त धिङ् मां नृशंसं महामतेः श्रुतधरस्य हन्तारं सर्वथा धिगस्तु मेऽधन्यस्य । अहो कृच्छ्रात् सन्निहितश्चिराभिलषितोऽयं कात्यायनप्रकाशनोचितोऽवसर इति मनसि कृत्वा शकटालो मे सुहृद्वरेण्यः प्रदत्ताभयं नरेश्वरमुवाच राजन् कृतं शोकेन प्रसीद ध्रियतेऽसौ प्राज्ञानामग्रणीर्महामन्त्री वररुचिरिति तत्क्षणं च प्रहृष्टमनसि योगनन्दे सहर्षं द्रुततरमयं मे पुत्रवत्स्तत्समीपं नीयतामित्युक्तवति तूर्णमेव हरिगुप्तं स्वगृहमानैषीत् । त नयनविषये पतन्तमुद्वीक्ष्यैव युगपज्ज्ञातहरिगुप्तभल्लूककेसरिवृत्तान्तोऽहं तत्कथनेन भृशमुन्मत्तं तं चित्तभ्रमाद्विमुच्य

सद्योजातत्रपाविनम्राननमुद्दामपश्चात्तापाविष्टविह्वलचेतस राजान चिराद् द्रष्टु शकटालहरिगुप्तकृतानुयात्रोऽयासिषम्। हे मे मनोहर्षयित्नो चिराद् दृष्टोऽसि ते स्वागतं किं कुशली भवान्, कथमृक्षशापं ज्ञातवानसीति तेन पृष्टे सदैव मया भट्टिन्या गृहप्रदेशे वर्तमान तिलकलक्षण ज्ञातं तथैव पितु. सदृशस्य मित्रद्रोहिणो भल्लूकाभिशापोऽपि स्वीयबुद्धितो विदित इति व्याहार्षम्। आकर्ण्य मद्वाक्यं सर्वजनगर्हितेन निजदौरात्म्येन सुतरां व्रीडित इवाधोमुखीभूय मदीयं शीलनैर्मल्यमभिज्ञाय हृदयंतुदेन विप्रतीसारेण दुर्मनायमान इव क्षणमवलम्बिततूष्णीभावो दीर्घं नि श्वस्य सपुत्रो महीक्षिदिति समुदैरिरद् यद् यन्मनोविकाररूप हृदि मे निरन्तरं समुद्रतरङ्गवत् संजाजायते तत्तत् कथं ते निवेदयामि कथं वा लघुचेतसां त्वत्कर्तृकेण, निर्ममेणोपकारेणातिवेलमनुगृहीतानां नः कृतज्ञतां प्रदर्शयामि दुर्निवारविवक्षाप्रेरितोऽपि वाग्व्यापारो मे कण्ठे केनापि मानसिकभावेन प्रतिरुध्यमानो निषीदतीव तस्माद् ब्रूहि किं ते प्रियं करवाणि समीहितं ते सर्वं समुपजोषमुपहरामि सखे। सत्कारेण किं समीहितार्थोपहारेणापि किं प्रयोजनं शैशवात्प्रभृति यथा व्याडिस्तथा त्वं मे बहुमतः सुहृदसि केवलं मित्रहितायैव मया प्रयतितं हे इन्द्रदत्त कच्चिदहमिवानुस्मरसि नः प्रथमसमागमं मद्गेहे कच्चित् पुनः स्मरसि पाटलिपुत्रे सब्रह्मचारिणामस्माकं सहवाससमयस्य, त्वं मे मित्रं वोऽनवीषि सोऽहमेवास्मि यं बहुभ्यो हायनेभ्यः प्राक् त्वं व्याडिद्वितीयः श्रुत-

धरान्वेषी बाल्येऽद्राक्षीः किं स त्वमसि यो मां बालकमादाय गुरु-सकाशं प्राप्तवान्, नेति चिन्तयामि सप्रत्यनुस्मर यन्निर्विकारेण मनसा त्वां राजानमपचारिणं ज्ञात्वापि सौहार्दान्यसेविषि कच्चित्त्वमपि मा सुहृद्दृष्ट्योपाचारी., नैवमिति तर्कयामि किं बहुना सांप्रतं राज्यकार्येषु व्यपेतानुराग संवृत्तोऽस्मि विघ्वसिता शाश्वतीः समा आवयोर्मैत्री सर्वं चावयोर्मध्ये कथाशेषीभूतमधुना साधयामि यथागत स्वगृहं प्रति, राज्यविभवसभोगसुखानि तेऽनारतं भूयासुरिति प्रस्तुत्य नृपेण योगनन्देन मुहुर्मुहू रुचिरसामशतैर्निवारितोऽप्यनादृत्य पाटलिपुत्रप्रयाणमार्गेऽस्थाम् । अथ कालेन पाटलिपुत्रं समासाद्य सुदीर्घकालाभिकाङ्क्षितेन निर्व्याजप्रेमबहुमानपात्रीभूतेन स्वजनेन शून्यीकृतस्य जीवितप्रदेन वारिणा विवर्जितस्य मरुस्थलस्येव सुकुमारहृदयपुष्पशोषिणो जराजीर्ण पुराणायतनस्येव जर्जरिताकारस्य स्निग्धगृहस्यातिशयमन प्रमाथिनी वार्तामश्रौषम् । बन्धुजनविनाशशोकेन निर्मर्यादबाष्प-प्रवाह-दुर्दिनायमानवदनो नि.शब्दं रोरुद्यमान श्वशुर उपवर्षो मां भुजान्तराले कृत्वा सदीर्घनि.श्वासमब्रवीन्नृपाधमेन योगनन्देन वररुचिर्निष्कारणं निषूदित इति किंवदन्तीषु दिक्षु सर्वासु विश्वतो वितेस्तीर्यमाणासु प्राणेभ्योऽपि गरीयस. पुत्ररत्नस्य निधनेन तत्क्षणस्फुटितहृदया ते जननी कथाशेषा संवृत्ता ते दयिता प्राणसमा भार्यापि स्वय विरचितचिताधिरोहण कृत्वा प्रदीप्यमाने हव्यवाहने- हव्यमिवात्मानमजुहोदिति । तस्मिन्नेव क्षणे दुर्दमेन

शोकवेगेन मूर्च्छा गतोऽहं निशातदम्भोलिनिपातितोऽनोकह इव तीव्रकुलिशदारुणवृत्तान्तश्रवणेन भूतले सहसा पतितवान् हे काणभूते न जाने कालं कियन्त मोहसागरे विनष्टचेतनो न्यमांक्षमिति यदाहं सुप्तप्रबुद्ध इव गाढमूर्च्छाकूपाराच्छनैः शनैश्चैतन्य लब्ध्वा पुनरुदस्थां तदा भ्रातृभ्यां वर्षोपवर्षाभ्या प्रयत्नतः समाश्वास्यमानमात्मानमद्राक्षं ततश्च जीवलोकेऽनित्ये सर्वं निमेषभंगुरं, यदि किमपि नित्यं शाश्वतिक ससारे भवेत् तदनित्यत्वमेव ननु भवतीति विद्वानपि किमिति मूर्च्छसि कस्माच्छोचसीत्यादिभिः परमार्थगर्भितैः सान्त्वनावचोभिस्ताभ्या तत्त्वार्थबोध ग्राहित. कथं कथंचित् प्रकृति प्रत्यपद्ये । ततश्चाहं प्रियसुहृद्वान्धवविश्लेपव्यथाचोक्षुद्यमानकोमलान्तरगसुमनसामनन्ततृष्णापरितापपरिशोशुष्यमानातृप्तेन्द्रियग्रामाणां दुर्विषहमोहकलिलशृंखलादृढबावध्यमानदुर्वलचरणानां शाश्वतानित्यताजालविमोमुह्यमानविवेकबुद्धीनां ममत्वमायाविसततातिसवेधीयमानाकुटिलमनसां कृते द्वैतभावातीतपरमसंमोदसुधारसनिस्यन्दिनि शश्वत्परिवरीवृत्यमानसंसारचक्रच्छित्वरे निरालोकान्धतामिस्रनीकाशाविद्याहंमत्यपहप्रभास्वरज्ञानदीपदायिनि निःश्रेयससाधनमार्गेऽच्छिन्नसर्वकर्मबन्धनच्छिदि सन्यासे धृतप्रत्याश. सकलदुरुच्छेद्यनिबन्धनमपहाय वीतरागद्वेषोऽतिवर्णाश्रमी भूत्वा विन्ध्याद्रिकृतवसतिं शंभुवल्लभा द्रष्टु छायाद्वितीय. प्रव्रजितः कैवल्यगमनतोरण चिराभीप्सितशिवसायुज्यप्राप्तिप्रकारं तपो मनसा समाहितेत तप्तुं विन्ध्य-

पर्वतस्थतपोवनं समाश्रिश्रिय ततश्च कालक्रमेण कदाचित्तत्र यदृच्छयागताद्... योगनन्दपुरोधसो वार्तासश्रवणकौतूहलाकृष्टो राजकुलोदन्त विचित्रमश्रौषम् । शृणु मुने राजकुलविषादवृत्तान्त यथावृत्तमिति कथामुख प्रस्तुत्य स वक्तुमुपचक्रमेऽयि महानुभाव त्वयि राज्याधिकार परित्यज्य निर्गते सुचिराल्लब्धरन्ध्र. शकटालो वैरशुद्धि चिकीर्षु राज्ञो योगनन्दस्य प्रतिघातनोपायं प्राप्तरूपमनारतमेव विचारयामास । अथैकदा कुशाग्रबुद्धिरसौ मार्गे गच्छन् निष्ठुरसूचि कुश सरोषमुन्मूलयन्त सभ्रू भङ्गभीषणानन चाणक्यनामानं ब्राह्मण निर्वर्ण्य सकौतुकमनुयुयुजे द्विजवर किं करोषीति, वैरशुद्धि करोमि तीक्ष्णदर्भसूचिविद्धचरणोऽह दर्भहतकमिमं समुन्मूलयामीति तेनोक्ते दुर्वाससमिव क्रोधालु परशुराममिव प्रमन्यु तं चाणक्यं योगनन्दनिर्वापनसाधन मत्वा श्राद्धकर्मणि राजकुले निमन्त्रयाचक्रे ततश्च श्राद्धकर्मणि भूरिदक्षिणेऽनुष्ठीयमाने सततमुत्तमासनग्रहणयोग्यमाग्रभोजिकमपि राज्ञाधस्तनासने निवेशित त कोपन सखेदमिव न्यगादीद् भो विप्राग्रेसर, अहो बत नृपेण ध्रुवमवहेलितोऽसीति । तद्गिरमाकर्ण्य सावहेलमधरपीठदानेन भूपतिना नितरा तिरस्कृतमात्मान विबुध्य शुष्कया समिधा कृपीटयोनिरिव दुष्प्रधृष्येण मन्युना प्रजाज्वल्यमानश्चाणक्यो महाकोप सपदि विमुक्तशिख सन् सप्तभिरहोभिर्नि सदेहमयमग्रजन्मापमानी नृपकीटो मया यमसदन प्रापयिष्यते ततश्च प्रशान्तेन मयेय शिखा भूयो भन्त्स्यत इति सुघोर

शपथमकार्षीत् तत्समनन्तर च निर्गत्य तस्य मृत्यूदर्कां रहस्यकृत्यां व्यधात्। अमोघफलेन प्रबलेन तत्कृत्यासामर्थ्येन भृशमुपहतो योगनन्दो (झंझावातेन भग्नस्तरुरिव दौर्भाग्यसब्रह्मचारिणा पुत्रेण सह सप्तमेऽह्नि परलोकयात्रामनिष्टामकरोत्। कथावशेषीकृते योगनन्दे बृहस्पतिसमानबुद्धिना शकटालसहितेन चाणक्येन विधिवदभिषिच्य सत्यनन्दस्य तनुजश्चन्द्रगुप्तो नाम महायशाः साम्राज्याधिशासने न्यवेशि ततश्चेत्थं निष्पादितनृपवैरप्रतीकारः शकटालोऽपि सफलीभूतमनोरथमशेषतश्चरितार्थमात्मानं मन्वानस्त्वमिव ससारेऽसारे विरक्तधीस्तपसे क्वापि तपोवनं जगामेति। एव दुरतिक्रमभववीचिमालिवीचिमालासंक्षोभितनिर्बलमर्त्यधर्मामर्त्यधर्मशसिनी कृपणां राजकुलप्रवृत्ति पुरोहितमुखादनुश्रुत्य परिखिन्नचेता नित्यानित्याविर्भावतिरोभावभवाभवादिद्वन्द्वलहरीहरी देवदेवदेवी देवी कत्यायनीमाराद्धुमित आगत्य जन्मान्तरशापमुक्तिहेतुकेन शरणार्थिसार्थशरण्याया भक्तवत्सलायास्तस्या निर्भरप्रसादामृतनिर्झरेण चिरन्तनशापमोक्षद्वारं त्वा ददृशिवाञ्जातिस्मरो भूत्वाहं सम्भुनास्मत्प्रभुना प्रथमं समुदीरितां बृहत्कथामात्मन ऐहलौकिकेन जन्मवृत्तान्तेन साक ते कथितवान्, भोः कारणभूते भद्र ते भूयात् क्षीणशापवन्धन. परिक्लेशमूलकमचिरस्थायिनं निष्करुणेन समारचक्रेण वस्तुत आजन्ममरणपर्यन्तं सपेपीड्यमानं दग्धमर्त्यविग्रहमिमं समुज्झ्य परमानन्दयुमयमस्मत्प्रभुपिनाकिसालोक्यमघुनैव प्राप्नोमि हे शापसब्रह्मचारिन् त्वमपि

मे जन्मान्तरसुहृदा माल्यवन्नामान्तरेण सर्वविपश्चित्पुरोगेण गुणाढ्येन सगत्य मुक्तकुबेराभिशापो धनदानुचरपदवीं पुनर्लप्स्यस इति काणभूतिमभिभाष्याचिरभाविशिवपार्वतीपुनर्दर्शनप्रत्याशाप्रमुदितान्तरात्मा महर्षिभिस्तत्त्वज्ञानमोक्षनि.श्रेयससवादं विधाय परमार्थज्ञानप्रवाहक्षालितरज सचय सवत्सरेभ्यो बहुभ्यो बहुभ्य पिनाकिवल्लभायाः शापजालाद्विमुक्त पुष्पदन्तो गणकुञ्जरो गम्भीरजलदसंदोहाद्विनिर्गतोऽमृतदीधितिरिव शिवलोके विरराजेति ।



# (६) गुणाढ्यकथा

सुधासारवर्षिकुमुदबान्धवार्धविम्बप्रसाधितमौलिकृशानुरेतः-समुदीरितरहस्यकथातस्करस्य पुष्पदन्ताभिधस्य सहचरस्य मर्त्यलोकनिपतनाभिशापनिर्वापणाभ्यर्थनादोषाद् वराकेण तेन सार्धं जन्ममरणविवर्जितशाश्वतपरमानन्दथुमयात् सदाशिवशिवलोकोदन्त-न्याकर्णितकथाचौर्यजामर्षरोहिताश्वप्रज्वलितरोहिताननया शांभववह्निश्वरजीवितभूतया महीभृद्राजतुषाराद्रिदुहित्रा चण्डिकया सततपरिवरीवृत्यमानदुःखावहससारचक्रतिर्दयपेपिष्यमाणाशेषजीव-लोके जीवलोकेऽनारतजातनष्टडिण्डीरसरूपे सरोपमवपातितः पाशुपतपारिषदाग्रणीर्माल्यवान् मनुष्ययोनिगृहीतजनुर्गुणिनामग्रेसरो गुणाढ्य इति यथार्थनाम मर्त्यविग्रहेण सुचिरनिषेवितशात-वाहनाह्वयमहीभर्तृसाचिव्योऽपि ततः संजातैहलौकिकजीवनयात्रा-वैराग्यः परिखिन्नमना विन्ध्यभूध्रविहितावसथभवानीदर्शनार्थं दक्षिणापथात् प्रव्रजितस्तस्याः पीयूषनिर्झरप्रतीकाशेन वचसा तत्रैव धराधरकान्तरे त्र्यम्बकसखस्य राजराजस्य शापेन विकृता-कृतिभीषणपिशाचभावं संप्रापितं काणभूतिनामानं निजाभिशाप-निर्मुक्तिहेतुं गुह्यकचरं दृग्गोचरे कृत्वा सहसा सुप्तप्रबुद्ध इव विरजीभूते मुकुरतल इव प्रसन्ने मनसि प्रतिविम्बितस्वजन्मान्त-

त्वरितो जातिस्मरो भूत्वा दुर्निवारसंप्रमोदप्रफुल्लवदनोऽमरतटिनीपरिष्कृतभालपट्टरोचिष्णुविरूपाक्षसालोक्यशीघ्रप्रतियियासाजरीगृह्यमाणसर्वात्मा दत्त्वा परिचयमात्मनस्त काणभूतिं सौहार्ददयम्भाविष्ट भो. काणभूते धनदानुचर वररुचिसञ्ज्ञात् पुष्पदन्तान्मदीयपूर्वजन्मसुहृदोऽनुश्रुतां कैलासपर्वते यथासुखं विहरता प्रभुनास्मदीयेन खण्डपरशुना दयितजायामनोविनोदायोपांशूदीरितपूर्वां बृहतीं दिव्यकथामविलम्बेन ब्रूहि यया शापाकूपारं नावा जलनिधिमिव पुरा समुत्तराव इति, तच्च निशम्य समासन्नकुबेरशापपर्यवसानसवेदपुलकितवपुषा कृताञ्जलिना तेन कथयामि ते त्रैलोक्यविस्मापनीं दिव्यमानुषसंबद्धां महाकथां किन्तु भवन्मुखारविन्दसंदर्शनमात्रेणैव मनसि मे संजाजायते कौतूहलमुद्दामं यदि न गोप्यं महानुभाव जन्मवृतान्तसंकथनेन भवत्पादमूले प्रणतमिम दासमनुगृह्णात्वत्रभवानिति सविनयं प्रार्थितोऽपुनःप्राप्यभूतकालानुस्मरणपारावारे दीर्घनिःश्वासपुरस्सरमात्मानं निमज्जयन्निव तत्क्षण ध्यात्वात्मीयमाजन्मचरित्रमुपवर्णयितुमुपचक्रमे । इतो दक्षिणाहि सुदूरेऽनेकयोजनशतविप्रकृष्टे कस्मिंश्चिज्जनपदे दाक्षिणात्ये सबभूव सोमशर्मसमाख्यो दुष्प्रापविद्यासागरपारगतविपश्चिद्वृन्दपुरोग. कोऽपि तत्रत्यद्विजकुलावतंसो यस्य नन्दनौ वत्सगुल्मनामानौ तथा नन्दिनी श्रुतार्था नाम सञ्जज्ञिरे यस्य चाहं दुहितरि समुत्पन्नो दौहित्रोऽस्मि । अथ कालक्रमेण वस्तुतोऽनिष्टमपि मनसाप्यधृष्य कालधर्मं प्रबलनियतिनियोगादुपगते भार्यासखे मम

मातामहे भ्रातरौ वत्सगुल्मौ भगिनीस्नेहरसार्द्रीभूतान्तरङ्गौ यथाभागशः स्वसारं परिपोषयन्तावासिषाताम् ततश्च गच्छत्यनिशं काले तरुणमनोमदयित्नुपुष्पधन्वसखागमेन संफुल्लसुमनोमञ्जरी वल्लरीवाक्लिष्टमुग्धचेतोहर्षयित्नुतारुण्यप्रादुर्भावेन प्रफुल्लस्निग्धवदनसरोरुहा पेशलकनककलशोपमकुचयुगलशोभिनी प्रत्यग्रयौवनारम्भारूढा पाणिपीडनयोग्यवय.स्थैयमवरजा भ्रात्रोस्तयोरनारतचिन्तास्पदं सववृते ततश्च कदाचिदनूढाप्यकस्मात् संपन्नगर्भोत्पत्तिः सा भ्रूणारोहणपरिधूसरालसाङ्गी श्रुतार्था पूर्वजयोर्मनसी निर्भरं संपीडयांबभूव । तस्या आकस्मिकगर्भाधानहेतोरेकत्र भृशदुःखितयोरपरत्र तत्र निवेशने पुरुषान्तराभावात् परस्परशंकाग्रस्तचेतसोः सोदरयोर्मनोजिघ्रा सा भगिनी दुर्भरव्रीडातिशयावणितमुखी सगद्गदं ता अभिबभाषेऽयि सोदरौ पारस्परिकविचिकित्सामत्र मा स्म कार्ष्टं मे पितृसमौ युवां, सूनृतं कथयाम्यस्ति दशकाधीश्वरस्य वासुकेर्भ्रात्रीयः कीर्तिसेननामा युवा य· कस्मिश्चन वासरे गोदावर्यां स्नान्तीं नवयौवनोद्यानपुष्पितमञ्जरीमक्लिष्टपरिपूर्णकान्तिं मा यदृच्छयोद्वीक्ष्य कुसुमायुधकुसुमबाणशरव्यतां सहसा गतो दुर्दमनमन्मथातुरो भूत्वा गान्धर्वविवाहविधिना पाणिं ममेच्छन्त्या. सानन्दमग्रहीत् ततश्चेयं तस्माद् द्विजनागकुमारान्मयि गर्भसंभूतिरिति । आकर्ण्य स्वसुरश्रद्धेयं तद्वचोऽन्योन्यस्य मुखं सदिग्धेन मनसा साकूतं दर्शं दर्शमित्यूचतुस्तौ, यथावृत्त याथातथ्यं वद तण्डुरीणोऽपि क. प्रतारणार्थगर्भमीदृशं ते वाक्यं प्रत्येति कथं नाम

मनुष्ययोनौ सरीसृपभ्रूणसंभवः संभावयते । अथ सा गत्यन्तराभावात् तयोरश्रद्दधानयोः सहजयो संदेहमपनेतु निश्चितमनाः प्रध्यातमात्राविर्भूतं फणियुवानं कीर्तिसेनं दर्शयति स्म । अदृश्यरूप समीरण इव स्वदयितास्मरणमात्रादकाण्डोपगत· स प्रोज्ज्वलनरवपुष्मान् पन्नगराजकुमार· सपदि भो· श्यालौ सोऽहं समस्तभुजङ्गमाधिराजस्य वासुकेर्नात्रेयो यवयोः प्रथमदर्शनेन सूतरां प्रोणितोऽस्मि युवां मे बहुमतौ श्यालौ विद्याधरचक्रवर्तिन. शापाद्भुवि निपातितौ विद्याधरौ स्थो युष्मत्स्वसेयमपि तच्छापवशान्मर्त्यलोकेऽत्र परिच्युता लोकसम्मतेन गान्धर्वपाणिपीडनसस्कारेण मया व्यूढा प्रियभार्या वरीवर्ति, युवाभ्यामस्यां विचिकित्सापुरस्सरोऽन्यथाभावो न कर्हिचिदपि कर्तव्योऽचिरेणास्या गौरीशापभ्रष्टो गणावतारो जगति गुणाढ्य इतिनाम्ना विख्यातयशा गुणवतां सर्वेषामग्रगामी शातवाहनराज्यधुरंधर स्वसृसहितयोर्युवयो· शापप्रशमनद्वारं भागिनेय उत्पत्स्यतेऽधुना भद्रं वोऽस्तु मामकीनात्मजजन्मना युष्माक विद्याधरधराचक्रवर्तिशापनिर्मुक्तिर्नि संशयं भविष्यतीति तदनन्तरं चरणमूले प्रणिपतिता गढानुरक्ता प्राणेश्वरीमुल्बणप्रेमरसार्द्रितेन वक्षसा परिरभ्य वत्सगुल्मौ सप्रश्रयप्रणमभिवाद्य चातर्कितमेव कुत्राप्यन्तर्दधे। तस्मिन् कीर्तिसेन तिरोहिते तत· कतिपयदिवसैर्जननी मे मामजीजनत् । मज्जनुरवधिकशापशृङ्खलानिगडितमर्त्यविग्रहौ मातुलौ मज्जन्मसमकालमेव स्वीया विद्याधरपदवी पुन. प्रापतु । तत सवत्सरेष्वन

नैकेषु व्यतीतेषु बाल्यस्थे मयि प्रक्षीणाभिशापपाशापि कृतान्तपाद-
सदानितचरणा कालिन्दीसोदरेण निष्करुणेनाहूयमाना वत्सव-
त्सला प्रसूर्जीवलोकमिममात्मन. सर्वस्वभूतं मां च सविषादमा-
मन्त्र्य सुदूरप्रसारिणा मृत्युहस्तेनापि पुनरप्राप्यं शश्वज्जरामरण-
व्याधिविवर्जितसदानन्दमयं नमुचिसूदनस्य सुनासीरस्य नन्दनोपवन-
नीकाश विद्याधरलोकमयासीत् । बालकोऽपि धृतिमानहं सुकुमार-
हृदयकुसुमवेधिनं मदेकाश्रयभूतमातृनिधनजमभिशोकं परमार्थतो
दुरतिक्रममपि धैर्येण धैर्येण समुल्लङ्घ्य दक्षिणाहि दवीयांसं जनपदं
जग्मिवान् तत्र कालेन साधारणबुद्धिमता दुरधिगममखिलविद्या-
कलापं सर्वात्मना करतलामलकवदुपलभ्य. सकलविद्यारत्नाकरः
श्रुतिस्मृतिपारदृश्वा समभूवं ततश्चैकदा शिष्यैः कृतानुयात्रो
वैश्रवणसमानद्युतिराजशातवाहनदिदृक्षया राजधानीमगमम् । अथ
कालक्रमेणासाद्य शातवाहनाधिष्ठितं पुटभेदनं घण्टापथेऽन्तेवासिभि.
समभितस्ततः परिचञ्चूर्यमाणो भूरिवरदाभ्या पद्मालयासरस्वती-
भ्या युगपत् सविलासं विजेह्लीयमाणाया हृदयगमविभ्रमभुवः
नगर्या. कामपि मनोरमा लक्ष्मी दर्शं दर्शं शृगाटकेषु क्वचित्
सरीसृपवत्कुटिललोकयात्रानिपुणानुसरणकोविदानां विदग्ध नाग-
रिकाणाम्, अहमस्मि श्रुतिपेयगान्धर्वमर्मविद् विचित्ररागपरिवा-
हितौर्यत्रिकप्रयोगकृतमुखो भरतावतार. धौलूप शिलापुत्तलिकाना
मनास्यपि घ्राणेन्द्रियतर्पणचन्दनसौगन्ध्यवाहिना मलयसमीरणेने-
वातिहृद्यरागतरंगप्रवाहिणा सुदूरमपहर्तुं समर्थो, मा मैव वाचाल

गर्जं शून्यमस्तको वैधेयोऽपि कस्तत्त्वार्थहीनं वाग्मिनस्ते प्रलपित श्रद्दधाति शृणु परातिसधानकलानिष्णात कौटिल्यसमानप्रभावोऽहं देवानांप्रियान् धनाढ्यान् रतिलम्पटान् प्रतिरात्रं कुलयोषिद्रूपधारिणीभी रूपाजीवाभिर्निपुणेन सयोज्य प्रचुर धनमुभयतोऽपहरामि न केवलं मुग्धकामिनां जिह्महृदयानां सवेश्यानां शम्भलीनामपि सकल स्वापतेयमपहृत्य नास्ताश्च सहेल नग्नीकर्तुमपि शक्नुयां यदीच्छेयमित्थकारं प्राज्यं द्रविणमुपार्ज्य नाम्ना दीननाथोऽहं गतिहीनाननाथान् पितेव परिपोषयामि, हे दीनवत्सल, अलं विस्तरेण शृणुत यूय वासरेभ्य कपिपयेभ्य. प्राक् कंचन पैतृकविभवमदान्धं महाधनं सततमधुपानसुरतनिरतमकिञ्चित्करत्वादिहलोके सर्वथा निष्प्रयोजन दौरात्म्यमयत्वात् सर्वजननिन्दित पैत्रधनव्ययशीलं युवानमनर्थकेषु मदिरानिषेवणमैथुनसभोगादिषु व्यसनेषु स्नानार्थंजलमिव हिरण्यं कथस्विदेवं निर्विचारं व्ययसीत्थमनिशमतिवेलपितृद्रव्यव्ययनिर्बन्धस्त्वया क्रियेत चेत्तत् पित्र्यद्युम्नं प्रभूतमप्यचिराद् ध्रुवं रिच्येत यतो दुरोदरहृन्मर्मज्ञस्य द्यूतेऽपराजितपूर्वस्य सदा पराजिष्णोर्मे सफलेन साहाय्येन रिक्थ बहुशो बहुशो बहुलीकुरुष्वेत्यादिभिर्मधुरिमनिस्यन्दिभिर्वचोभिर्विप्रलोभ्य द्यूतसमाजे मया पूर्वमेव कृतमिथ समयेन परप्रतारणाप्रवीणेनाक्षधूर्तेन ग्लह कारयित्वा पणित तदीयसर्वस्वमात्मसात्कृतवानहं ततो नग्नीकृतप्राय उपसव्यानशेषो मूर्खोऽयं त्रपातिशयेन नगरेऽत्र स्थातुमसमर्थ कादिशीक इव देशान्तर द्रुत निर्जगाम, अरे कितव

कृ। कैतवेनायशस्करेण सर्वदा सर्वशश्चार्जवमेवाश्रित्य व्यवहर्तव्यं किं न श्रुतं युष्माभिर्यन्मादृशेनाकिञ्चनेनापि ऋजुक्रतुना सद्व्यवहारद्वारा लक्ष्मीरनुत्तमा प्राप्यत इति, पुराहमासं निर्धनो दारिद्र्यबुभुक्षापरिमृदितः कदाचिदुत्क्रान्तप्राणं मूषकं गृहीत्वा परिभ्रमन् गृहपोषितमार्जारार्थं तदर्थिने चणकाञ्जलियुगलपरिमितेन मूल्येन तं विक्रीय भृष्टास्ताञ्चणकाञ्शीतलवारिकुम्भेन सह समादाय गोपुराद्वहिरनातपे छायाद्रुममूले कृतोपवेशः परिश्रमसजातक्षुत्पिपासेभ्य. काष्ठिकेभ्य. श्रमातपनुदं शीताम्बु चणकांश्च समर्पितवान् सजलचणकदानेन प्रीतैस्तैरेकैकशो दत्तानि काष्ठानि लब्ध्वा विपणौ व्यक्रैषं ततश्चाहमल्पेनैवावक्रयेण क्रीतचणकराशिरपरेद्युरपि तत्र गत्वा तेभ्यो वनेचरेभ्य. शीतलवारिसहिताञ्चणकानुपहृत्य सप्राप्तभूरिकाष्ठभारस्तत आपणे काष्ठसचयं विक्रीय फलेन लाभवान् प्रमुदितमनाश्चणकद्रोणं स्तोकमूल्यदानेनाक्रीणामेवकार काष्ठचणकवाणिज्यं प्रत्यहं कृत्वा कतिदिवसान्तरे तेभ्यः काष्ठभारिकेभ्यस्तत्कालोचितवस्त्रसमर्पणेन समस्तान् दारुराशीनक्रैषं तदनन्तरं दैवादकाण्डोपनतातिवृष्टिधारासपातैर्नीरन्ध्रैः पुरि काष्ठक्षये संपन्ने सति बहुभ्य इन्धनार्थिभ्योऽहमहमिकया दुर्लभाः समिधश्चिक्रीषुभ्योऽतिमूल्येन तानि काष्ठानि सर्वाण्यनायसेन विक्रीतवान् ततश्चाहं पण्यवीथी कृत्वर्जुव्यवहारतत्परोऽपि वाणिज्यनिपुण. कालक्रमेण महासार्थ. समस्तवणिगग्रणीरभूवमित्यादीन् विचित्रलोकव्यवहारपिशुनान् वार्तालापानाकर्ण्य क्वचि-

द्विद्वद्गोष्ठीषु प्रवृत्तैर्दुर्बोधवेदप्रमुखविविधशास्त्रार्थविचिन्तितत्प-राणां विपश्चिता वादविवादैः क्वचिन्मन्दिरेषु श्रोत्रियैर्यथाविधि जेगीयमानैः श्रवणसुभगैश्छन्दोभिश्च मोमुद्यमानो राजकुलं प्रविश्य द्वितीयं गुह्यकेश्वरमिवाक्षय्यचामीकररत्ननिधिं राजानं शातवाहनं दृष्ट्वा तेन सभाजितो मन्त्रिपदमपि प्रापमिति । निजाजन्मचरित्र-वर्णनावसरेऽवितथमिति वादिनं माल्यवन्तं गुणाढ्यसंज्ञया लोके प्रसिद्धयशसं काणभूतिः पप्रच्छ कस्माद्धेतो स महीमघवा शात-वाहन इत्यभिधीयते तस्य नाम्नि विचित्रे कौतुकं ममेति । तज्जि-ज्ञासाविष्टमनसं तं कुबेरानुचरचरं पिशाचं महामहिमप्रभास्वर-स्वरूपो गुणाढ्य प्रत्युवाद श्रूयतां पुरा बभूव दीपकर्णाह्वयोऽप्रमेय-पराक्रमानुभावात्मसात्कृतचतुर्णवसीमवलयितभूमण्डलो यथा-वकाशसामदानभेददण्डोपायचतुष्टयोपयोगकुशलो दुर्ग्रहसूक्ष्मषाड्-गुण्यादिराजनयनिर्णयप्रयोगविचक्षणदूरदर्शी सदाचारशीलगुण-संपन्नत्वादात्मनो दोषज्ञोऽपि न परेषां दोषज्ञो दुर्धर्षबुद्धिबलवैभव-करदीकृताखिलसामन्त-नृपमौलिचंचच्चूडामणिकर्बुरद्युतिद्युतितचर-णयुग्मो दरिद्रविद्वत्समाजे वदान्योऽपि शात्रवेऽवदान्यः सूक्ष्ममति-रपि स्थूलमतिरनिष्टेऽमित्रे क्रूरो मित्रेऽक्रूरो दीर्घदृष्टिरप्यदीर्घसूत्री महीभृदधिराजस्तस्य च शास्त्रनिर्णीतविधिवत्कृताभिषेका प्राण-समा वल्लभा शक्तिमती नाम बभूवाकलङ्कितेन्दुमुखी नि शेषलल-नाललामभूता मनोभिरामवरवर्णिनी यस्या मनसिजजायावतार-संकाशायाश्चारुणा विभ्रमापाङ्गदृष्टिविक्षेपेणैव सकलजगद्विजि-

गोषु पुष्पधन्वा रतिपतिः सहसा प्रबुध्य सदर्पमिव सकुसुमबाण सभ्रमरज्य चापं हस्ते दधार। अथ कदाचित् समुद्रवेलामुद्रितोर्वीमण्डलस्य साकल्येनात्मीकृतत्वाद् वीतज्वरो राज्यस्यातिप्राज्यस्य सुदृढवद्धमूलत्वाच्च निश्चिन्तो राजकीयनियोगानुष्ठानप्रवीणेषु राष्ट्रधुरधरेषु मन्त्रिषु समर्पितराज्यभारः सार्वभौमो दीपकर्णः सहस्रश सहस्रश. सर्वत्र समुन्मीलितमञ्जुपुष्पगुच्छस्मेराननमहीरुहे मधुरमधुपानशौण्डमधुपप्रिये युवमिथुनमनःसमुल्लासजनयितरि सुमनसां परिमलसुरभौ सुरभौ प्रेयस्या, परिपक्वबिम्बौष्ठपरिचुम्बनचञ्चुनोष्ठचपकेण मधुराधरं पायं पायं तस्याः सुवर्णकुम्भोपमे पीनोन्नतस्तनाभोगे मनोमोहिनि गिरिनितम्बप्रतीकाशे च पीवरनितम्बफलके स्वच्छन्दतश्चिक्रीड। ततस्तत्र क्रीडोपवनेऽतिशयनिधुवनशिथिलाङ्गी विस्रस्तदुकूला भर्तुः पार्श्वे सुखशयिता देवी कृतान्तकिंकरेणेव तीव्रविषधरेण चक्षुःश्रवसा दष्टा तत्क्षणमेव तीक्ष्णगरलवेगाद् विलिल्ये। अकाण्डे पञ्चतां प्राप्तायां तस्यां तद्वियोगानलदग्धप्रायक्षीणपरिधूसरवपुरनपत्योऽपि दूरीकृतकलत्रान्तरपरिग्रह. पुन्नाम्नो नरकाद् यस्मात् त्रायते पितरं सुतस्तस्मात् पुत्र इति विद्वानपि नरेश्वर उररीकृतब्रह्मचर्यव्रत. स्वप्ने समग्रभक्तजनशङ्कर शङ्कर साक्षाच्चकार। वत्स द्रक्ष्यसि गहने कान्तारे यथामुख परिभ्रम्यमाण विकटकरीरवारूढ सप्तवर्षदेशीयं कुमारं यस्ते जन्मनि पूर्वस्मिन्नपि पुत्रोऽभूत् स भूयस्ते सुतो भविष्यतीति वरदेनार्धेन्दुमौलिनोक्ते त स्तुतिशतैः सादर प्रणम्य प्रहृष्टचेता

दीपकर्णस्तामटवी प्राप्य विकचकमलसरोवरस्य रोधसि विहरन्तं सिंहवाहनं महातेजसं कुमारकं पश्यन्नतिभृशं पुलकितवर्ष्मा मनसि सद्योजातपितृस्नेहरसप्रथमास्वादप्रमुदितसर्वात्मा निर्मर्यादपुत्रसिस्वंक्षयैकेनैव सटङ्कारातमौर्वीगुणाद् धनुषो मुक्तेन विशिखेनामोघफलेन करालाकृति केसरिणं जिहिंस। तत्क्षणात् स मृगेन्द्रः सविस्मय राज्ञ पश्यत. स्वविग्रहमपहाय धृततेजोमयपुरुषाकृतिरञ्जलिं बद्ध्वा तमित्यभिदधे भो मनुजेन्द्र सजीवनौषधीतुल्यत्वत्प्रसादनिर्मुक्तशापबन्धन. शातो नाम त्र्यम्बकसखस्यालकेश्वरस्य पारिपार्श्विको यक्षोऽस्मि, पुरा कस्यांचित् काननतरङ्गिण्या स्नानं विदधती निजरूपलावण्यनिर्जिताप्सरसं मुनिकन्यका ददृशिवान् सपदि मनोमथनपुष्पायुधशरव्यतामगमं सापि तेजस्विनं मामुद्वीक्ष्य मदनविधुरा समजनिष्ट तत्समनन्तरं च यथावद्विहितगान्धर्वपाणिपीडनौ सुखिनौ दम्पती यथातृप्ति सर्वंकषमन्मथसाम्राज्यसुखमनिर्वचनीयमावां निरविक्षाव तच्च ज्ञात्वा प्रकुपितमुनय भावामस्यशाप्सुर्बन्धुजनानिष्टकारिणौ युवा सिंहावस्थां मंक्षूपपद्येयां किन्तु स्वैरिण्यास्तवौरसोत्पत्तिपर्यंन्त शाप स्थास्यति, गुह्यकापसदस्य ते शापस्तु दीपकर्णभूपालशरव्यध।वधिको भवत्वित्यभिशापपर्यवसानमपि सकृपमकार्षुस्तत. पश्चास्यजपती भूत्वा दुर्गमविपिनानि व्यचारिष्व काले च मेऽन्तर्वत्नी भार्या पुत्रकमुरुविक्रममिमं जनयित्वा व्यपादि, तस्यां शापविनिर्मुक्ताया स्वपदवीं गतायां स्तनधयमेन धात्रीभूताना केसरिणीना दुग्धेनाह समवी-

युग्मम्, राजन् गृहाण मयार्पितं वीर्यवन्तमात्मजमिमं यो जन्मान्तरे त्वत्तनूद्भवो बभूव, सम्प्रति सपुत्रकं त्वामापृच्छे गच्छाम्यलकापुरीं त्वदीयेषुघातेन दिष्ट्या खंडितासह्यपीडशापबन्धन । अभिशपनावसानजनितसंमोदातिशयसंजातपुलकोद्गमे तस्मिन् धनदानुचरवरे सहर्षं तिरोहिते वसुधरानाथो दीपकर्णस्तं कुमारमुरसि कृत्वा युगपत्संवृत्तमहोत्सवसमाकुलमात्मीयं निवेशनमतिमात्रप्रीणितमानसः प्रत्याजगाम ततश्च शातनाम्ना सिंहभूतेन गुह्यकेनोढत्वाच्छातवाहन इत्यस्य नाम चक्रवान् कालक्रमेण तं रत्नसिंहासनेऽतिष्ठिपत् । एवं प्रोच्य विरते तस्मिन् गुणाढ्ये महामते भूयोऽपि कर्णशष्कुलीसुखदेन शातवाहनचरितकथनेन मामनुगृह्णातु भवानिति कथान्तरेऽतिहृद्यकथासंश्रवणकौतूहल्याविष्टविवशचेतोवृत्तिः काणभूतिस्तं प्रार्थयाञ्चक्रे । यदि शुश्रूषा कर्णं देहीति प्रस्तुत्य माल्यवान् पुनर्वक्तुं प्रचक्रमे ततो वयोवृद्धे वानप्रस्थभूते पितर्यरण्यं प्रविष्टे सार्वभौमः शातवाहन मधुसमये वसन्ते विलासोद्यानदीर्घिकायां वैश्रवण इव चैत्ररथवाप्यां मनोज्ञकटाक्षविभ्रमप्रबोधितमनोभूभिः कामातुरकामुकहस्तसंवाहनसमुचितस्पृहणीयकुचकुम्भयुगलापहसितकनककलशाभिः सुरतकेलिनिरतकामिजनारोहणार्थनिर्मितक्रीडापर्वतनितम्बसरूप-पृथुपेशलजघनभारालसहंसगामिनीभिर्लम्बोरुरम्भोरुतिरस्कृतरम्भाहृश्रेयोभिरन्त.पुरकामिनीभिः सममुद्दामजलकेलिं विदधत् ताश्च वारिक्लिन्नगाढासक्तदुकूलदरव्यक्तशरीरावयवरेखानितान्तरम्या विलासिनीः करपुट-

पूरितैरम्बुभिरजस्रमभिषिञ्चंस्ताभि. स्पृष्टास्पृष्टिपूर्वकमभिषिच्यमानो यथातुष्टि रेमे। ततस्तत्रैकतमा कामिनी निरन्तरैः करवारिभि प्रसह्य तेन सेपिच्यमाना विदुषी स्मितपूर्वं बभाषेऽयि राजन् मोदकैर्मा परिताडयेति। आकर्ण्य तद्वच. सूक्ष्मश्लिष्टशब्दार्थानभिज्ञः शातवाहनो झटिति बहूनि मोदकान्यानीय शिरीषकुसुमकोमलाङ्गयष्टि ता तैर्मोदकैस्ताडयितुमारेभे। तादृशी तस्य मूढचेष्टां सखेदमिव प्रत्यक्षीकृत्य सा जिहसिषामतिवेलां कृच्छ्रान्निगृह्य चैव भूयस्तं व्याजहार देव कोऽवकाशोऽत्र मध्येदीर्घिकं तोयान्तरे मोदकानां, मयोक्त मामुदकैर्मा परिताडयेति कथमिव त्व मूर्ख इव माशब्दोदकशब्दयो. सुबोधं सन्धिप्रयोगमपि नावगच्छसि। इत्युक्ते तया शब्दशास्त्रविदि परिजने सर्वाभिर्देवीभि साक हसितैः किलकिलायति स भूपालोऽन्तर्व्रीडाभिभूत. दूरीकृतसलिलक्रीडो वैलक्ष्यलज्जारुणित वदनमधरीकृत्य राजभवने प्रतिनिवृत्य स्वाविद्याजनितनिर्वेदज्वलनपरितातप्यमान. परित्यक्ताहारो वाचयमतामाश्रित्याहर्दिवि केवल द्राघीय सु दुर्वारसतापजेषु नि श्वासेषु द्राघीयासं कालमतिवाहयन् सविषादमासिष्ट। प्रभो किमर्थं भृशमात्मानमनुशोचसि कस्मादश्लिष्टमात्मन सुरक्षणीय शरीरमित्थकारं परिशोषयसि, जनुषा सर्वप्रजापूज्येन त्वं महापराक्रमसपन्नस्तपनतेजा सार्वभौमोऽसि, नैराश्यमीपत्स्खलितेन ज्ञानेन मा स्म गम, सहस्रदीधितिप्रभावेनेव दुष्प्रसहेन सहजसाम्राज्यभावेन सुतरा सुतरा प्रदेदीप्यमानो महीभर्ता त्व पाकशासन इव त्वदा-

ज्ञाविधेयैवं बृहस्पतिसमानबुद्धिभिर्गोलमंत्रि-प्रभृतिभिर्विबुधैरनिशमु-
पचर्यसे तथापि यदीच्छसि त्वयि प्रकृष्टं पाण्डित्यं संपादयितुं वयं
सर्वात्मना यतिष्यामह इति शर्ववर्मप्रमुखा. सर्वे वयं मन्त्रिणस्तं
विषण्णममसान्त्वयाम । भृशं परामृश्याह नूनतवादी शातवाहनम-
वादिषमायुष्मन् पञ्चभिर्हायनैः कृत्स्नविद्यासागरपारगत मनीषिणं
त्व करिष्यामीति । ततो युष्मादृशा· पण्डितंमन्या दूरे तावत्तिष्ठन्तु
केवल षण्मासाभ्यन्तरे राजन् त्वां विद्याविशिष्टं नूनं विधास्या-
मीति मुख्यामात्यः शर्ववर्मा सगर्वं व्याहार्षीत् । तच्छ्रुत्वाहं
साक्षेपमभाषिषि कथंकारं षड्भिर्मासैः पाण्डित्यमधिगम्यते, त्वया
पराजीयेय चेत् संस्कृतप्राकृतापभ्रंशात्मिका भाषात्रयी सर्वथा
परित्यज्य वाचंयमो भवेयम् । प्रत्यवोचच्छर्ववर्मा मन्त्रिवरो यद्यदि
षण्मासेनास्मत्प्रभुं बहुश्रुतं कर्तुं न शक्नुयां तर्हि द्वादशवर्षाणि
त्वदुपानहौ शिरसि वक्ष्यामीति साटोप प्रतिश्रुत्य तपश्चर्ययाराधि-
तस्य षाण्मातुरस्य कार्तिकेयस्य वरात् स्वयं विरचितेन कातन्त्र-
व्याकरणेन प्रतिज्ञातैर्मासैस्त चक्रवर्तिनं विद्याकृतमुख पण्डितं
व्यदधात् । उत्तरत्र तेनाथ वैयाकरणकुञ्जरेण शर्ववर्मणा सहेलं
पराभूतोऽहं पराजयकीलकीलितहृदय. सार्वभौमेण शातवाहनेन
सनिर्बन्ध निवारितोऽपि दुःखातिशयेन मनिष्य उदीच्यं दिग्भागमया-
सिष ततश्च समागाद्य विन्ध्याद्रि तपसा दुश्चरेण प्रीणितायाः
कात्यायन्या वचसा त्वा मदीयनिवर्गाज्ञोऽयममनसर्गिण दृष्ट्वा
जातिस्मरो भूत्वा परित्यक्तवाणीत्रयोऽपि सोऽयहं देवीप्रसादेन

तद्भिन्ना पैशाचीभाषामवम्व्य त्वया सुमनसा पृष्टश्चरित्रमात्मीय-मा जन्मनोऽद्यपूर्वं यथावृत्तमित्थं कथितवानस्मि। इत्येवं गुणाढ्य-मुखाच्छ्रुत्वा संतुष्टिमदभ्रामनुभवन् हर्षविकसितस्मेरानन काण-भूतिस्तमुवाद धन्योऽस्मि त्वदनुग्रहास्पदीभूतो, हे महाभाग ह्यस्तन्या विभावर्या त्वद्दिदृक्षाप्रेरितमनसा मयानुयुक्तस्य दिव्यदृष्टेरनागत-दर्शिन सुहृदो भूतिवर्माभिधस्य राक्षसस्य वदनात् त्वच्छापमुक्ति-निदान गुणाढ्य एव आगमिष्यतीति वचन निशम्याद्योल्वणोत्क-लिकासन्तेष्वयन्त्रितेषु सोत्कण्ठ प्रतीक्षितत्वदागमनस्त्वामद्राक्षमि-दानी वररुचितोनुश्रुता महाकथा कथयामि यया सुदारुणाभिशाप-शृङ्खलाद् विमुच्यावहे, परन्तु चेतसि मे परिशिष्टैकैव विविदिषा विद्यते तामुदारधीरत्रभवान् तर्पयतु, केन कारणेन त्व माल्यवान् स च वररुचि पुष्पदन्तसंज्ञया कस्माद्धेतोर्विश्रुतिमवाप्तवानिति। श्रूयतामिति व्याहृत्य माल्यवत्पुष्पदन्तजन्मान्तरवृत्तान्तकथानकं प्रस्तोतु गुणाढ्यः प्रारेभेऽस्ति भागीरथीकूले तत्रत्येन भूमिपालेन ब्राह्मणसात्कृतो बहुसुवर्णको नामाग्रहारस्तत्र कोऽप्यग्रजन्मा गोविन्ददत्ताह्वः पुरा सुदर्शनैरपि भ्रष्टचारित्रैर्विद्याविहीनै. पञ्च-भिर्मूर्खपुत्रै सह निवसति स्म, कदाचिदथ वैश्वानरनामा तदीय. सखा तांस्तनूजान् दुर्विनीतान् वैधेयान् प्रत्यक्षीकृत्य कथ नाम त्वं विशृङ्खलान् दुश्शीलास्तनयान् न शिक्षयसीति सर्पिषा प्रज्वलितो वैश्वानर इवामर्षेण प्रदीप्तस्तेषा पितर गोविन्ददत्त-मतिभृशमनिन्दीत्, सोऽपि निन्दितस्तं सखाय कुपित कथचित्

प्रसन्नचेतसं कृत्वा ततो मौनव्रतमाश्रित्य निजौरसांस्तान् निकृष्ट-
जातीन् दिवाकीर्तीनिव कुर्वत. परिहरन् दिवारात्रं गम्भीरे शोक-
सागरे न्यमांक्षीत् तं च तथाभूत पुत्रमौर्ख्यंदुर्विनयसतप्तमानमं
जनकमवलोक्यातीव दुर्मनायमानौ ज्येष्ठकनीयासौ तनयौ प्राज्य-
भक्तिगमिना तपश्चरणेन त्रैलोक्याधीश्वरं त्र्यम्बकं पार्वतीवल्लभं
प्रसादयितु सभ्रातृत्रय जनयितारमामन्त्र्य गृहात् प्रायासिष्टां
ततश्च क्वापि तपोवनायतने ज्यष्ठो भ्राता प्रमथाधिपधूर्जटिपर्यु-
पासनैकाग्रमना अनारतमेव लोकपृणसौरभवाहिनीभिर्बहुविधरुचि-
रसुमनोगुच्छगुम्फिनाभि प्रत्यग्रप्रसूनमालाभिर्वृषध्वजं पूजयन्
प्रसन्नेन तेन विश्राणितमाल्यवन्नामा समभूत्, कारणभूते त विद्धि
मा, कनीयास्तु कृशानुरेतसो, वत्स त्वमैहलौकिकान् हृद्यतरान्
विषयसभोगान् यथेच्छ भुक्त्वा भविष्यत्कालेऽस्मत्प्रमादाद् गणपद-
मवाप्स्यसीति सौभाग्यदायिन वरमुपलभ्य निशातबुद्धिः कालक्रमेण
श्रुतिनिधेर्वेदकुम्भनाम्नो विश्रुताचार्यात् कार्त्स्न्येनाधीतशास्त्रसमुदायो
विपश्चित्पुरोगः समवर्तिष्ट। अथैकदा स मेऽग्रजो वसुवर्मसंज्ञिनो
नृपस्य प्रफुल्लयौवनस्यां सुतनू श्रीनाम्नीमात्मजा यदृच्छया दृष्ट्वैं-
कपदे स्मरवागुरायां निपपात। सापि सुभ्रूरपरं कदर्पमिव दरी-
दृश्यमानं सुभग सुलक्षणं महातेजसं तं समुद्वीक्ष्य कदर्पदर्पनिगृहीत-
सर्वाङ्गी दरापत्रपिष्णु. पौनःपुन्येन पुष्प दन्तैः खण्डयन्ती तत्रैव
तस्थौ। मदनातुरान्तरसोऽप्यसौ तदभिप्रायमज्ञात्वा तत्क्षणमेव
गुरुसकाशं गत्वा च तस्मै तन्निवेदयांबभूव, त्वं विदागुरु तस्या

अभिप्रायं यस्मात्तया दन्तै पुष्पं खण्डित तस्मान्नूनं पुष्पदन्ताभि-धमुपवनं सूचित तत्र सकेतो विहित इति गुरुमुखात्तद्रहस्यसज्ञार्थं शिक्षित्वा द्रुततरं तत्र ययौ तां च प्राप्य पुष्पितनवयौवनवल्लरी-मतिशयमधुरमधुरसनिस्यन्दिनी चकितचकितहरिणशावाक्षी सद्य-समुत्पन्नदुर्भरमदनमदजनितवेपथुतरगितमनोज्ञकुचतटीमुरसि कृत्वा मन्मथवेगव्याकुलो यथेप्सितं परिचुचुम्ब। ततो निर्मर्यादपरिचुं-बनविश्रमान्ते सा स्मेरस्मरफेणतरगिणी त परमानन्दसिंधु युवानं सकौतूहलमनुयुयुजे नाथ कथ सूक्ष्माकूतगर्भिता मम संज्ञामवेदीरिति। अयि सुन्दरि त्वदभिप्रायाज्ञानखिन्नमनसे मह्यं सर्वज्ञ नुधीर्वेद-कुम्भोपाध्यायस्तत्संज्ञार्थं न्यवीविददिति सरलहृदयेन कामुकेन याथातथ्ये कथिते शृगरहित बलीवर्दमिव मनीषाप्रतिभानविहीनं त मत्वा, प्रज्ञाविवर्जितो मौग्ध्यविभूषणो देवानांप्रियोऽसि कथमिव त्वयि मूढे मेऽनुरागो, मुञ्च मा विदुषीमिति सनिन्द निगद्य रह संकेतप्रकाशनभयाद् द्रुततरगति सा राजदारिका क्षिप्रमियाय। एवं तया मानिन्या निष्प्रयोजन' पटच्चरच्छेद इव निष्फलो नपुसक इव परित्यक्तोऽसौ मे सोदरोऽपत्रपातिरस्कारनितान्तविमनीकृतो युगपद्दृष्टनष्टप्रेयसी—विश्लेपतनूनपाद्दग्धप्रायभस्मपरिधूसरसर्वाग प्राणेश्वरि दयिते कथं मामनुरक्त विहाय गतासि क्वासि देहि मे वचनमिति क्षणमुन्मदिष्णुरिव प्रमुक्तकण्ठं विलपन् निरन्तरबाष्प-प्रवाहपरिपूर्णाक्षः क्षणमन्धीभूत इव दिङ्मोहप्रस्खलितपादक्षेप पांसुले भूतले झगिति पतित्वा मुमूर्च्छ। अथावलोक्य त कृपण

मूर्च्छालं जीवितसंशयवर्तिनं व्योमविहारी जायासखोऽर्धेन्दुमौलि करुणार्द्रया हिमवद्दुहित्रा स्वयं याचित सन् कामरूपं पञ्चचूडसमाह्वयं गणवृषभमाज्ञापयाञ्चकार पश्यासौ तपस्वी काममोहितः प्राणसकटे वरीवर्ति गच्छ प्रकृतिस्थमेन विधाय तत्तत् कुरु यद्यदिच्छति सोऽयं वराक इति। भगवन् यथाज्ञापयसीति शिरसि धृततदादेशस्तरस्वी पचचूडस्तत्क्षणान्महीतलमवतीर्य तं मेऽवरज स्वस्थ कृत्वा युक्त्या त वधूवेषधारिणं विधाय कामरूपी सपदि स्वयं प्रवयसा ब्राह्मणेन परिणतस्त वरागनारूपं समादाय राजभवन प्रति प्रचचाल ततश्च वसुवर्माण भूभुजमासाद्य तनूद्भवो मे जनपदान्तर प्रयातस्त गवेषयित्वा पुनरागमिष्यामि मत्प्रतिनिवर्तनसमयपर्यन्तमिय मे स्नुषा त्वद्धस्ते निक्षिप्यते तदिमां मदर्थे सुरक्षितां कुरुष्वेति राजानं प्रोच्य लब्धतदनुमतिर्निर्जगाम। अथ नृपेण सुगुप्ते कन्यकान्त पुरे निवेशितोऽसौ योषिद्रूपो मे सहजोऽल्पेनैव कालेन तस्या राजपुत्र्या विश्वासपात्रीभूतोऽनन्तहृदयंगमक्षणदाया क्षणदाया सुदुर्ललितमनोजन्मसंक्षोभितवेपमानहृदयां ता सुदृढं दोर्भ्यां परिरभ्य सस्मितं व्याजहार मज्जीवितसंजीवनौषधे मीनकेतनसागराकर्षणचन्द्रिके सोऽहमस्मि मूर्खोऽयमिति त्वया जीर्णोपानद्वत्परित्यक्तपूर्वस्तथापि कुशाग्रप्रज्ञावती विदुषीदानी कन्यान्त.पुरप्रासादसुखसचारिणं वधूरूपिण मा कथं न ज्ञातवत्यसीत्युक्त्वा वैलक्ष्यस्मिताधिकचारुवदना वेलातीतमकरध्वजकल्लोलतरंगितरुचिरवक्षोरुहा परिचुम्ब्य तदीयाधरमकरन्दपानरोमांचित-

वपुर्गान्धर्वेण वैवाहिकविधिनोपयेमे तदनन्तरं चातृप्तिकरं मुहुर्मुहुरावर्तितसवेशनसंभोगं समुपजोषमास्वाद्य प्रातस्तरामुपाश्वलक्षितस्तस्मादन्तःपुराद् दुद्राव । अथ प्रभाते जराजीर्णपलितविप्राकृतिः कामरूपः पञ्चचूडस्तमपनीतवधूवेषं प्रच्छन्नकामुकमादाय राजकुलं गत्वा नरेश्वर प्रोषितो मे नन्दनोऽद्य समायातस्तदस्य वधू मे प्रतियच्छेत्यभिबभाषे । तन्निशम्य क्षिप्रं कन्यकान्तःपुरादस्य द्विजातिवरस्य स्नुषा समानीयतामिति विश्वभराधिपेन समादिष्टस्तत्पार्श्ववर्ती परिजनो निर्गत्य मुहूर्तान्तरे प्रविश्य च ससम्भ्रमं विज्ञापयाञ्चक्रे देव तिरोहिता सा न कुत्रापि दृश्यत इति । अकस्मात् पलायिता तां परिज्ञाय भृशं क्षुभितमना स भूभर्ता मन्त्रिभिः सम्मन्त्र्य पुरा नृपपुंगवः सकलसत्त्वबन्धुर्दयालु शिबिरपि मायाधृतगृध्रवपुषा दिवस्पतिना पुरुहूतेन परीक्षितो बभूव, नूनमयमपि कश्चिद् दिवौका मां परीक्षिषुरायातः स्यादित्यभिधाय शापभयभीतोऽतिकृच्छ्रेण तं जराजर्जरिताग्रजन्मरूपं गणं प्रसाद्य स्नुषास्थाने स्वकीयामौरसीमुपजहार । तां प्राणसमामुपलभ्य दयितादन्तखण्डितपुष्पसंज्ञया पुष्पदन्त इति कृतसंज्ञोऽसौ मे कनीयान् भ्राता श्वशुरस्य विभूतिष्वक्षय्यासु तया सह यथातृप्ति रममाणः कालेन स्वतनूद्भवं महीधरं राजानमभिषिच्य परित्यक्तमनुष्यविग्रहः सभार्यं शांभववरादहमिव गणावस्थां लेभे। तथापि हन्त बलीयसी नियतिः केन निवार्यते संपदप्यापदा जातु परिणमति सुखमपि कदाचिद् दुःखेन सर्वं हि जगति मृगतृष्णिकावत्क्षणस्थायि भवत्य-

थैकदा प्रेयसीमनोविनोदाय विजने स्मरहरेण हरेण कथितो सर्वजनमनोविस्मापनीं बृहती कथामुद्दामशुश्रूषाविष्टचेता. सोत्कण्ठं तस्करवदुपश्रुत्य शैलराजतनयया सरोषं शप्तः पुष्पदन्तस्तच्छापनिर्वापणाभ्यर्थनाप्रणतेन मया साकं भुवि जीवलोके निपातितस्तत्श्च तां मनोहरी महाकथां ते कथयित्वा क्षीणपापः पुनरिदानी गणपदं प्राप्तवान् तस्माद् भोः काणभूते पुष्पदन्तादनुश्रुता तामेव बृहत्कथा मे यथाशीघ्रं कथय येन तपस्विनोरावयो. शापप्रणाशो भविष्यति । हे महामहिमशालिन् बहुश्रुतविद्वच्छार्दूल भवत्प्रसादपात्रतां खलु गतोऽहं भवदीयजन्मत्रयोपवर्णनेनातिमात्रमनुगृहीतोऽस्मि हे अप्रमेयमहानुभाव शृणोतु भवानहमपि विनिर्मुक्तशापशृङ्खलः कौबेरीमलकापुरी यियासुरस्मत्परिवृढसखस्य पिनाकिनो वदनसरोरुहात् कैलासाद्रौ गिरिजायै समुदीरितां विद्याधरधराभुजां सप्तचक्रवर्तिना वैचित्र्याश्चर्यमयीमतिप्राज्या कथामधुना कथयामीति काणभूतेर्वचनं निशम्य कविशिरोमणिर्गुणाढ्योऽव्हितेन मनसा तेन निगदितां सप्तलक्षश्लोकात्मिकां पैशाचीवाङ्मयी तां बृहत्कथामात्मनो रुधिरेण लिलेख तांश्च गुणाढ्येन सुधिया विरचितामनेकशतग्रन्थपरिमाणा महाकथा संपरीक्ष्य प्रहर्षातिशयसजातरोमाञ्च. काणभूतिर्दुस्सहक्लेशावह प्रतिभयपिशाचकलेवरं पटच्चरमिव समुत्सृज्य सुचिराभिलषितं स्वपूर्वस्थानं पुनरवलम्बितप्रभास्वरराजराजानुचरवर्ष्मा प्रीतिविकसितास्य. सहर्षं प्रययौ । तत एतन्महाकथासमर्पणयोग्यभाजनं नृपोऽयमिति मनसि

विधाय शातवाहनाय ता प्रजिघाय । ता लब्ध्वापि कथैषा निकृष्ट-कौणपभाषापरिगुम्फिता मनुष्यैरस्मादृशै परिहर्तव्या प्रणेताप्यस्याः शर्ववर्मणा मुख्यमन्त्रिणा पराजितत्वाद् दुःखायमानः परित्यक्तप्रकृष्टमनुष्यवाणीत्रयो मौनमाश्रित उन्मदिष्णुरिति साक्षेप जल्पित्वा दर्पाध्मात स महीपालस्ता यथागतं विससर्ज । इत्थंकारं वस्तुसारानभिज्ञेन तेनाविभृश न्यक्कृतो विषण्णमना कविवरेण्य शिष्यसमक्षमेव विस्मृताशनेषु कृष्णसारविहगमपुरस्सरेषु समग्रजंगमेषूत्कर्णेषु शृण्वत्सु ता मनोरमा लोमहर्षणी बृहत्कथामहर्निश प्रतिवासरमविच्छिन्न मधुरया गिरा वाचयन् प्रज्वलितज्वाले हुतभुजि पत्र पत्रमजस्र प्रचिक्षेप। अत्रान्तरे दिवारात्रं परिशुष्कनीरसमासशकलभोजनादित स शातवाहनो मृगयुशाकुनिकादीना वैतसिकानां वचसा मृगपक्षिणा परिशोषणहेतु विदाञ्चकार तत्क्षणाच्च दुर्निवारेण कौतूहल्येनाचरीकृष्यमाणो महदद्भुत तत् साक्षात्कर्तु गुणाढ्यसमीपमियाय केवल श्लोकलक्षावशिष्टा महती कथा निरीक्ष्य गुणाढ्यादुपलब्धसमस्तोदन्तस्तत् सर्वलोकसुदुष्प्राप विचित्रकथारत्नं गृहीत्वा प्रतिनिववृते । तदनन्तर नीरजोज्ञानविज्ञानक्षीराब्धिप्रक्षालितरजोवृत्तिर्दिव्यदृष्टिर्गुणाढ्योऽपीम मर्त्यलोकमापृच्छ्य पुनरवाप्तमाल्यवद्गति शिव शिवलोकमुत्पपात ।

# (७) सहस्रानीककथा

अस्ति कौबेर्यां दिशि सकलजगल्ललामभूतेऽनन्तरत्नसस्य-विभवसतत-परिपूर्णकोशागारोपहसितदिवस्पतिसुनासीराधिष्ठिताक्षय्यसमृद्धिमद्द्युजोकेऽनपायिसद्धर्मपथानुसारिन्यायानपेतप्रजानुग्रहनिग्रहचिन्तनतत्परदण्डनीतिप्रयोगातिनिष्णातामृतदीधितिवशसमुद्भवविश्रुतपार्थिवपरम्पराशासनसुरञ्जितपौरजानपदे राजवत्यपि राजन्वति वत्सनाम्नि जनपददेऽनवद्यरूपलावण्यनिर्जिताप्सरसा वरवर्णिनीना कदर्पदर्पदर्पिनाना सुरतेषु केशग्रहवर्जमन्यत्र परस्परकेशग्रहानभिज्ञप्रजागणसौजन्यहृदिस्पृशि सुरनिम्नगाभीष्मसूसूर्यतनयासङ्गमपवित्रितप्राज्यबहुविधसस्यविराजितक्षेत्रभूमिरमणीयेऽलकापुर प्रतिपक्षनगरीव विश्वसृजा सृष्टा लक्ष्मीविभ्रमभूर्विश्वभराया हारयष्टिरिव नयनाभिरामा मरकतशिलावैदूर्यचामीकरखर्जूरादिबहुमूल्यवस्तुनिर्मितानेकभूमिकोच्छ्रितप्रासादहर्म्यमालानुमीयमानमहाविभूतिशालिनी तथोपरिस्थापितविविधमणिखचितशातकुम्भकुम्भशोभितगोपुरतोरणान्वितप्राकारपरिखावलयिता कौशाम्बी नाम राजधानी यत्र बभूव सर्वकपत्रिपुरान्तकस्तुतोर्जस्वलविक्रमस्य धनुर्विद्यापारगताखिलधनुर्धराग्रेसरस्यारिंदमस्य कृष्णसारथेर्गाण्डीवधन्वनो यशस्विन्यभिजनेऽभिजातोऽभिमन्युप्रपौत्रो जनमेजयतनूद्भव. शशिकुलालकारशिरोमणिभूत. स्वदोर्दण्डपराक्रमकथा-

शेषीकृतामित्रशतानीकः शतानीकनामा समस्तानुजीविसामन्तमौलिन्यस्तपद्मरागादिरोचिष्णुमणिकिरणारुणिताङ्घ्रियुग्मो महीक्षिदधीश्वरो यस्यानायसभुजधृतालघुभूभारस्य यशस्कायस्य महातेजसः पाकशासनस्य बृहस्पतिरिव मन्त्रिवरो युगधरः षाण्मातुरसमानविक्रमः सेनानी सुप्रतीपोऽनारतराजकार्यचिन्तनकदर्थितमनोविनोदस्थानभूतोऽग्रजन्मगोत्रसभवो नर्मसचिवो विदूषकश्चेति विश्रम्भपात्रीभूता सुहृद मुहृदस्त्रयो बभूवुर्यस्य च कलत्रीकृताद्भ्रवसुदवसुदस्याप्युद्दामानुरागभाजनमपर कलत्र विविदे विष्णोर्दयिता लक्ष्मीरिव प्राणसमा विष्णुमती नाम चित्तयोनिवल्लभा रतिरिव मन्मथपीयूषलहरी तथापि या पाणिपीडनदिवसात् प्रभृति बहुतिथे व्यतीतेऽपि काले प्रतिपक्षकामिन्या वसुधरायामप्रमेयरत्नसस्यफलरूपाणि प्रमाणसंख्यातीतान्यपत्यानि जनितवत्यामपि भर्तृकृतेऽविच्छिन्नसुधाशुवशस्थितिकरं सूनू न सुषुवे। अथ जातु विष्णुमतीजानिरसौ क्ष्माभृच्छार्दूलो मृगयाविहारप्रसगतो मनोजवहयारूढोऽमोघफलाधिज्यकार्मुकद्वितीय शरव्यवेधिमार्गणतृप्तिकरहिंसालुश्वापदपरिमार्गणतत्परो गह्वरेऽश्र कषशालवृक्षप्रमुखविविधवनस्पतिनीरन्ध्रराजिसमाकुले कान्तारे तरसेतस्तत परिबम्भ्रम्यमाणो यदृच्छया तपोवनाश्रममासाद्य तत्र प्रदेदीप्यमानद्युतिपुञ्ज तपोधन शाण्डिल्यमुनिं प्रेक्षाञ्चक्रे निजगोत्रनामाभिजननिवेदनपुरस्सर च महामहिमशालितपोमूर्ति तमभिवाद्य निरन्तशशिकुलप्रतिष्ठाविधायकात्मजप्राप्तिवरं मनोजिघ्रात् स्वाभिजन-

सौहृदयप्रीणितात् तस्मात्तापसादुपलभे ततश्च कोशाम्बीमागत्य भूरिदक्षिणे पुत्रमखे शास्त्रनिर्णीतविधिवन्मुनिपुंगवेन तेनानुष्ठिते-ऽनन्वय पुत्रकामो दशरथसमानप्रभावः स वसुधाधिनाथः कालेन पितृभक्त दाशरथिमिव कुमुदबान्धववंशोन्नतिहेतुकं दयितदयिताया विष्णुमत्या प्रसूतमात्मनन्दनं सहस्रानीकसंज्ञकं विकचद्युति सर्व-राजलक्षणसंपन्नपरिपूर्णकान्तिमद्वपुषं सर्वलोकदुष्प्रापं प्राप। ततो गच्छत्यनिशं काले क्रमानुसारेण चन्द्रान्ववायावतंसभूतं तनूजरत्नं यौवराज्येऽभिषिच्य निशितचन्द्रहासप्रासशक्तिप्रमुख-भयानकदिव्यास्त्रप्रहारातिघोरे मेघनादोपमसिंहनादक्ष्वेडिततुमुले दिविषद्दानवाना महासांपरायिके दिवि शस्त्रैः शस्त्रैरन्योन्य प्रहृत्य ततः सर्वेष्वायुधेषु शतधा सहस्रधा विदीर्णेषु दण्डादण्डि बाहूबाहवि केशाकेशी नखानखि च प्रवर्तमाने दिवौक-सामाधिपत्य जिघृक्षुभिः प्रबल्योत्सिक्तयमदंष्ट्रपुरोगैरसुरसैन्यैः कदर्थैर्भृश कदर्थितेन सहस्राक्षेण शतमन्युना मम साहाय्यं कुर्वित्या-र्तस्वरेणाभियाचितशौण्डोपकारः आर्तबन्धुरुत्साहशक्तिसम्पन्नः शतानीक शक्रसारथिना मातलिना मातरिश्वजवव्योमस्यन्दनमा-रुह्य मक्षु दिवमेत्य सानुचरस्य ससहयुध्वनो वृद्धश्रवसोऽतिविस्मय-विस्फारितसहस्रनेत्रस्य साधुवादपूर्वकं सविस्मयं प्रेक्षमाणस्य महा-सयुगाजिरे सहेलमापततो बाहुबलदर्पिलास्तान् यमदंष्ट्रप्रमुखान् सुरद्विषो बहून् निहत्य यमसदनं नीत्वातिमानुषपराक्रमविस्मापित-सुरासुरोऽपि निशितधारायुधसंपातव्रणितवर्मा सुमहदभ्यामर्दोप-

सहारे चरमं वीरसदृश दिष्टान्तमवाप्त संग्रामाजिरनिहततेजस्वि-सांयुगीनप्रियाभिरप्सरोभिरहमहमिकया स्वयवरभर्तृत्वे वव्रे। इत्थकारं स्ववधूवृतामर्त्यात्मन सर्वलोकैकधनुर्धरस्य महावीरस्य तस्य भूभुक्कुञ्जरस्य निखिलदिविषद्वृन्दसप्रश्रयरणविहितसत्क्रिया-पूतमाखण्डलसमादिष्टेन प्राजित्रा मातलिना भुवमानीतं कलेवर प्राप्य जगदेकवीरपितृनिधनावदेदीर्यमाणहृन्मर्मा युवराजोऽजस्र-प्रवहद्बाष्पौघोच्छूनलोचन. सहस्रानीको नृपोचिता श्राद्धक्रिया चकृवांस्ततसमनन्तरमेव भुवि कीर्तिशेष गतवन्त भर्तारमनुगताया विष्णुमत्या सङ्क्रान्तराजलक्ष्मीको भूभारचिन्तनप्रवीणैर्विस्तृतराज्य-धुरधरैर्युगन्धरपुरस्सरैर्मन्त्रिभि सानुनय मातापित्रोर्विनाशशोकम-पनीय प्रबोधित पितृपैतामहं रत्नसिंहासनमारुरोह। तस्मिञ्जन-कसमानाजय्यपुरुषकारे रूपसौदर्यनिर्जितकदर्पाहश्रेयसि प्रत्यग्रयौव-नारूढे सहस्रानीके नानाविधमणिकदम्बकखचितजाम्बूनदमय स्वच्छेनात्मनो यशसेव तुहिनधवलेनातपत्रेण कौशेयेन वितानीकृत पैतृकं भद्रासनमधिरुह्य पृथिवी शासति ससामन्ताना नि शेष-महीभुजा दुर्धर्षाणा सदोन्नतशिरसामपि शिरासि बलिष्ठकुलिश-निर्घाताभिहतानां महीरुहाणामग्राणीव प्रह्वता जग्मु। तत काले यातेऽल्पीयसि परिपन्थिपराजयमहामहे सानन्दं स्वर्लोकेऽमरावत्या प्रवर्तिते शतानीकसाहाय्यपराभूतासुरबलः कृतज्ञो नमुचिसूदनो देवदूतं मातलिं पुन प्रेष्य समस्तविश्वसुदुर्लभस्य सकटसुहृद औरस स्नेहबहुमानपूर्वमुपनिमन्त्रयाञ्चक्रे। सहर्षमुररीकृतनिमन्त्रणस्तन्म-

होत्सवदिदृक्षाविष्टमना· सहस्रानीकोऽञ्जसा शतक्रतुलोकमागत्य प्रचुरदक्षिणोपहारसभाजनयुजा प्रशसनीयेनातिथेयेन तेन पाकशासनेन सत्कृतो महामहयोग्योपस्करसामग्रीसमुपेतं यथातृप्ति निर्विशन् मनोहर्पयित्नु मह्नोत्सवविधि नन्दनोपवने वरारोहाभि· कामिनीभि· समं स्वच्छन्दतो विहरत· पर·महसान् सदामुखिनोऽनिमेपलोचनास्त्रिदिवेशाननिमेषलोचनो भूत्वा सस्पृह दर्शं दर्शं किमपि किमपि मानसिकावस्थान्तरमनुबभूव । तत्क्षणात्तदवस्थस्य तस्य यूनो मनसिजभावाकूत विदित्वा त्रिविष्टपाधिनाथ· पुलोमजाजानिस्त सकृपमभिबभापेऽयि वत्स शश्वदानन्दथुमये मनोऽनुकूलेऽविज्ञातशोकजवाष्पोद्गमेऽजरामरे त्रिदशालयेऽत्र विशेपत. शत्रुविजयमहोत्सवावसरेऽस्माभि· सस्नेहमाकारितो वरिवस्यासंमानार्हे प्राघूर्णिको भूत्वा किमिति विपण्णवदन इवावलोलोक्यसे मा स्म खलु विपद फलिष्यत्यात्मानुरूपदारपरिग्रहसमीहा त्वदीया नचिरेण, कर्णं देहि वदते मे, सहस्रानीक त्वदर्थे सृष्टपूर्वा तावकीनरूपाभिजनसदृशी सुरूपा जाया मेदिनीतले सजाता पुराह चतुर्मुखं हिरण्यगर्भमुपासितुं विधूमाभिधेन वसुनानुगम्यमान कमलासनभुवनमयासिप तत्रैव संपूज्य पितामह यथाज्येष्ठ गृहीतासनेपु सर्वेष्वस्मासु परमेष्ठिदर्शनार्थं मन्दगन्धवाहदरविगलितदुकूलमंजुला स्वर्वधूरलम्बुपा नाम मनोमोहिनी वरवर्णिन्युपासार्पीत् ता नेत्रमुपमप्सरसमवलोक्यैव स विधूमः काममोहितः कुसुमायुधशरव्यतामगात् तत सापि चक्षुष्य त दृष्ट्वा विभ्रमकटाक्षवाणान्

तस्य वपुषि मुहुर्मुहु प्रक्षिपन्ती मन्मथातुरा समबोभवीत् तत्क्षणं तयोर्दुर्विनीत तादृश चेष्टित प्रत्यक्षीकृत्य सजातामन्दामर्षो ब्रह्मा सपद्यभ्य-शाप्सोज्झटिति मर्त्यलोके दु.खावहे विश्रृङ्खलमर्यादौ निपतत तत्रैव दुर्ललितौ काममूढचेतसौ युवां दपती भविष्यथो नात्रेति कमलसंभवेन विरिञ्चिना शप्तोऽसौ वसु स त्वं कौशाम्बी-पुरि शतानीकस्यामरकीर्तेस्तनूद्भवश्चन्द्रवशालकारचूडामणि सवृत्त सापि तच्छापादलम्बुषा वसुमतीतलेऽयोध्याधीश्वरस्य राज्ञ. कृतवर्मणस्तनूजा मृगावती नाम समजनिष्ट या दुर्वारनियतिनि-योगादेव पुरा जीवितसमा ते भार्या भवतीति । श्रुत्वा दिवस्पते-रमृतसंकाश वचो युगपदुद्भूतमकरध्वजसधुक्षितकामाग्निप्रजा-ज्वल्यमानान्तरात्मा तद्गतमना भूत्वा तत काले दिवौकसा प्रभुणा शचीपतिना यथार्हं सभाजयित्वा विसृष्ट. क्षमाभृत् सहस्रा-नीको मातलिना प्रचोदितेन विमानेन निजनगरी प्रति प्रतिष्ठमानो मृगावतीध्यानतत्परमनस्कत्वाद् व्योममार्गे तद्रूपसौन्दर्याचरीकृष्य-माणमनसा त्रिदिवललनया तिलोत्तमया हे राजन् किञ्चित् ते निवेदयितुकामास्मि मुहूर्तं प्रतीक्ष्यतामिति सानुराग प्राक्तोऽप्य-नादृततद्वाक्य इव पृषदश्वरंहसा प्रचचाल । अम्बरादतितरसा क्षितिमवतरन्तं तं युवानमवधीरणाव्रीडिता पृष्ठतोऽनुपतन्ती शशाप गगनेचरी तिलोत्तमा यस्माद्यया मुषितचेतास्त्वयि स्निह्यन्त्या. सुभगाया मम वचनं न शृणोषि नृप तस्मात्तया हृदयशोषणो विरहस्ते चतुर्दशसमा सत्पसीष्ट, न खलु न खलु मादृश्यो मनस्विन्य.

कम्यचिदप्यनादरं तितिक्षन्ते हीति। इत्थं सरोषं तयाभिशप्तोऽपि वधिर इवानाकर्णिततदीयशापाक्षरो मेघवाहन-वाक्यामृतपुलकित-वपुर्वपुषा कौशाम्बी मनसायोध्यां सोत्कण्ठमियाय कालेन चाल्पीयसा समासाद्य स्वीयं पुटभेदनं मृगावतीपाणिग्रहणविषयमुद्दिश्य युगन्धरसुप्रतीपपुरोगमैर्मौलैरमात्यैः सह संमन्त्र्य कालविप्रकर्षा-सहिष्णुरदृष्ट – कान्तामुखेन्दुदिदृक्षापरिपूर्णहृत्सागरोऽवनिपतिः सहस्रानीकस्तामभियाचितु राजदूतं तदिपतू राज्ञः कृतवर्मणोऽन्तिकं क्षिप्रं प्रजिघाय। ततोऽयोध्यापुरीमाजग्मुषो दूताद् वत्सेशस्य संदेशं सहर्षं शुश्रुवान् कृतवर्मा तं स्वदुहितृकरग्रहणयोग्यं वरं मत्वा महिषीं कलावतीमुपांशूवाद देवि वैवाहिकवय.स्था मृगावती परम-प्रेमपात्रमस्मद्दुहिता सततमस्माकं चिन्तामवहति दिष्ट्याद्य कौशाम्बीनाथसहस्रानीकसकाशात् तदर्थं संदेशहर इह समायातो यदि त्वमनुमन्यसे चन्द्रमस. कुलभूषणाय पितृसदृगातुलविक्रम-विभूतिसंपन्नाय तस्मै वत्साया हस्तं विश्राणयितुं कामय इति निशम्य च भर्तृ निगदितं देव कपिध्वजान्वयस्थिनिकरोऽसौ सहस्रा-नीको वत्सोद्वाहनोचितोऽपरापेक्षया वरीयान् वरो भवेदिति मन्येऽद्य स्वप्नेऽप्यशरीरिणी वाक् समुदभूत् ते कन्यारत्न वत्साधीश्वरस्य प्राणेश्वरी भविष्यतीति तदायुष्मन् कालक्षेप परिहृत्य तस्मै नन्दिनी निश्चितमेव समर्प्यतामिति तया कलावत्या सानुरोधं प्रत्युक्ते स महाराज. संपूर्णकान्तिमैन्दवीं देवीमिवाभिन्नलावण्य-मयीं तां दुहितरं रजनीकरकुलावतंसाय महातेजसे तस्मै यथाविधि

विश्राणयाम्बभूव । अथ प्राप्य तामभिनवयौवनविलासोद्यान-पुष्पमञ्जरी रतिसर्वस्वभूतामप्रमेयानुरागतरङ्गिणी कृतवर्मणा आत्मजामसौ मन्मथ इव द्वितीयो वेलातीतानन्दसिन्धु सुधा-निधिवश्य संप्रमोदकोटिं समारुरोह ततश्च कालक्रमेण पुष्प-धन्वना सगता रतिरिव तेन संगता साध्यापन्नसत्त्वा भूत्वा सुधासिक्ता पौर्णमासी मृगलांछनकलेव गर्भगौरवालसगतिर्धवल्येन सुतरां विरेजे । अत्रान्तरे कुलक्रमागताना महीक्षितो मन्त्रिवरेण्या-ना स्वस्वकुलधुरधरा औरसा सुचिरादुत्पेदिरे, प्रधानमतिसचिवस्य युगन्धरस्य नन्दनो यौगन्धरायणो नाम बुद्धिमान् समुदपादि वाहिनीपते सुप्रतीपस्य तनयोऽतनुबाहुवीर्यशाली रुमण्वान् नाम समजनि तथा च नर्मसचिवस्य ब्राह्मणस्य नर्मावतार इव वसन्त-कनामा तनूज. समजनिष्ट । ततः कियति याते समये निशाकर-गर्भिणी क्षीराब्धियोनिरिव गर्भाधानातिशुभ्रानना सा सहस्रानीक-वल्लभा देव जङ्गमरुधिरभरिते कासारेऽह सिष्णापामीति दुर्निवारदोहदतर्पण सत्त्वशोणितौघपूरितक्रोडासरोवरनिमज्जन भर्तारं दौहृदवशादभ्यर्थयाञ्चक्रे देवि तथा त्वत्कृते दीर्घिका रक्त-पूर्णा द्रुतमेव कारयिष्यामीत्युक्त्वा च परमधार्मिकेण महीभुजा भृत्यैरविलम्बित काश्मीरजलाक्षारागपुञ्जान् समानाय्य तैररुणी-कृते सरसि प्रभूतजन्तुलोहितलोहित तडागमिदमिति मन्वाणा सस्नौ । अहो वत विधिहतके प्रतिकूले ननु कोऽर्थः. साध्यतेऽहह दग्धभाग्ये प्रातिकूल्य गच्छति विपत् किमु नोत्पद्यतेऽशुभोदयपिशु-

नमननुकूलदैवं केन वा पौरुषेण निवार्यते। दोहदच्छद्मनाथ कुंकुमालक्तकरङ्गरञ्जिते तत्र पद्माकरे स्नान्तीं मृगावती विलोक्य करालाकारभीषणो विष्णुवाहनकुलोद्भवः क्रव्यादः पर्वतोपमो महापक्षी सहसापत्य किंकर्तव्यताविमूढचेतसामतिविस्मितानां राजभृत्यानां सर्वेषां बाहूच्छ्रित्य रे रे पाप पक्षिकीट परित्यज देवीमिति हाहाकारोच्चारणपूर्वकमाचोक्रुश्यमानानां पश्यतामपि तामामिषधिया सुदूरमपजहार ततश्चातर्कितोपनतजीवितसंशयमूर्च्छितामप्यनुत्क्रान्तप्राणां तां निर्वर्ण्य सूर्याचन्द्रमसोरुदयशैले दैवनियोगादिव परिजहौ। जीवितेश्वरीं गृहीत्वा जगदेकमनोरथभूमिमात्मनः सर्वस्वं तां समीरणरंहसोत्पततस्तस्य खगेश्वरवैनतेयवंश्यस्य महापतत्रिणो दिशं रे रे दग्धविहंगापसद मे सर्वस्वचौर क्व यासि पतगकीट निर्दय विमुञ्चैनां मेऽसुसमां दयितामिति प्रमुक्तकण्ठमुच्चैस्तमामाक्रुश्य जवेन सर्वेणानुधावन् मनोजवतुरङ्गमारूढः प्रेयसीतिरोधानशतधाविदीर्यमाणहृन्मर्मा तां गवेषयितुं निर्ययौ ततोऽनेकतिथं कालं हे तुरगहतक नाम्ना निरर्थकेन तुरङ्गोऽपि त्वं तुन्दपरिमृजोऽसीति वातेरितेनेव वेगातिशयेन सहेपारव शफैः पांशुलं भूतलमुत्खायेव वावल्गमानमतिजवनं निरंतरोद्गतधूलिपरिधूसरं तं हयोत्तमं चर्मतोत्रेणाभीक्ष्णं ताडयन् बहून्याश्वीनानि समतिक्रम्य पत्ररथाधममुषितभार्यान्वेषी क्वाप्यदृष्टमनुष्यसंचारां दुर्गमामटवीमाससाद तथापि सा न कुत्राप्यदृश्यत। अथ दुस्सहक्षुत्पिपासापरिश्रमपरिमृदितगात्रे सामिविवृतसृक्कोद्गीर्णलाला-

जले वाजिनि दीर्घाध्वपरिखेदारुणितदुर्बलेऽक्षिणी विघूर्णयति विषमोपलशकलोच्चावचे क्षितितले निपत्य पचता याते हृदयवल्लभाविनाकृतस्तपस्वी तत्परिमार्गणैकाग्रधी सहस्रानीकोऽसह्यपीडा बुभुक्षामपि विस्मृत्य निर्मर्यादसीधुपानक्षीव इव निर्भरपरिक्रमजनितक्लमथुघूर्णिताधीरपादक्षेप पादचारी कान्तारे गहने सर्वत्र परिचञ्चूर्यमाण पुरूरवा उर्वशीमिव मृगावती गवेपयाञ्चकार तथापि सा क्वापि न ददृशे। हा प्राणसमे क्व नु गतासि देहि मे वचन भो भो पक्षिव्यसक मदीया हृदिस्था कुत्रापनीतवानसि रे रे क्रूरपतत्रिदानव निष्कृपोऽपि सकृप एधि यदि ता मे प्रतियच्छसि तर्ह्यात्मन· प्राणानपि ते दास्यामीति क्षण परिदेवयमानो हे उन्नतशिरसो वनस्पतय. किं जानन्ति भवन्तो वराकी मे पत्नी कस्मिन् प्रदेशे वरीवर्तीति क्षणमुन्मदिष्णुरिव व्यर्थमरण्येरुदितं कुर्वाण इतस्तत· परिबम्भ्रम्यमाण पांशुमलपटलमलीमसपरिक्षीणविग्रहो भूरुहकटकच्छिन्नजर्जरितपटच्चरोऽनारतपर्यटनस्फीतचरणपरिस्खलद्गतिरदर्शन गता ता परिमार्गयाञ्चक्रे तथापि हन्त सा न कुत्रापि प्रादुर्बभूव। इत्थकार बहुतिथ काल दयितजायान्वेषो क्षुत्पिपासादौर्बल्यपरिमरीमृद्यमानसर्वाङ्गो नैराश्यनिर्वेदविनष्टचेतनो भूरवापक्रान्तासुरिव मुमूर्च्छ तं च तथाभूत वराकमवलोक्य दूरदर्शिना सहस्राक्षेण कृपणबन्धुना पुलोमजाजानिना सदय तत्र प्रहितो मातलिरह्नाय त विमानेन कौशाम्बीस्थ राजभवनमानीय दिव्यप्रभावेन प्रकृतिस्थ कृत्वा प्रोवाच हे राजश्चतुर्दशसवत्सरास्ते

भार्यावियोगो भवत्विति धृतिमुपं तिलोत्तमाख्यातं तदानीं किं नाश्रौषीस्तथापि मा स्म विषादं गम पुरा नरपतितल्लजस्य पुरूरवसो दयिताविप्रयोगोऽपि दीर्घसमा संबभूव किं पुनस्त्वमसि समग्रलोकपूजितस्य सुधांशुभ्रसुधांशुवंशस्यानुत्तमं भूषणं भूपालमतल्लिका तस्माद् धैर्येण धैर्येणानन्यमना भूत्वा प्राज्यराज्यधुरमेवोद्वहन् कालमतिवाह्य तत. शापावधौ परिसमाप्ते सति भूयस्तेऽसुसमासमागमो भवितेति तद्वचश्च श्रुत्वा सोऽपि राजपुंगवो हा प्रियतमे पश्य स्ववेश्या तिलोत्तमा नि.संशयमद्य पूर्णमनोरथा संजातेति मुक्तकण्ठ रुरोद । अत्रान्तरे तस्या देहमपहाय तस्मिन् खगराजे तिरोहितेऽपसृतमूर्च्छा शनै. संज्ञा लब्ध्वा गगनचुम्बिनीरन्ध्रवृक्षच्छन्नदुस्सचारादृष्ट-सूर्यकिरणपर्वतनितम्बस्थितमेकाकिनं निष्ठुरपक्षिनखरविच्छिन्नैकवासस सर्वथा गतिहीनमनाश्रयमशरणं कर्कशहृदयेन कृतान्तेनाप्युपेक्षितमात्मानं सविस्मयं प्रत्यक्षीकृत्य भयविषादवेपमानतनूलता भीतभीतवीक्षणविक्षेपैं सर्वा दिशो विस्तीर्णनीलशतपत्त्रदलावृता इव कुर्वन्ती वक्षोरुहस्थलपर्यन्तनिरन्तरनिपतन्मुक्ताफलस्थूलबाष्प-बिन्दुविहितकृत्रिममौक्तिकहार-यष्टि. सा मृगावती हा सनाथाप्यनाथा सजाताहं हा जीवितेश्वर दौर्भाग्यान्धकूपे पतिता क्षीणपुण्या दुर्भागा कदा नु खलु मदीयसर्वस्वस्य ते परिपूर्णकान्तिं वदनेन्दु पुनर्द्रष्टु शक्ष्याम्यहहा हतास्मि जीर्णोपानदिव दैवेनापि प्रतिकूलेन परित्यक्तास्मि त्वदाननसरसिजपुनर्दर्शनप्रत्याशयापि पश्चात्कृताहं कमर्थमपेक्ष्य जीवामीति सशोकं

तार रोरुद्यमाना नैराश्यादात्महत्यां विधित्सुर्विकटकायस्य वन्यदन्तावलस्य पुरत स्व शरीर प्रचिक्षेप तथापि दयार्द्रचेतसीव तस्मिन् दन्तिनि पराङ्मुखीभूते सा भूय ऊर्ध्वसटाततास्यप्रतिभयाकारस्य कण्ठीरवस्य समुखमात्मन. शोकार्त कलेवरं परित्यत्याज तथाप्यसौ मृगेश्वरस्ता न जघान तदनन्तर चैवमलब्धस्वच्छन्दमरणोदानी भृगुप्रपातोन्मुखी स्वप्नेष्वपि न जातुचिद् विस्मृतस्य प्राणनाथस्य भर्तु सोत्सुकमनुस्मरन्ती कण्ठप्रतिरुद्धाश्रुनिर्झरगद्गदं विलालप्यमाना कठोरपाषाणस्खलितचरणन्यासा कथचित् कथचिद् भृगुशिखरमारोहन्ती दग्धविधिहतकदग्धप्राया सा राजमहिषी तस्मिन्नेव मुहूर्ते कुशकन्दमूलान्वेषणार्थं यदृच्छया तत्रोपस्थितेन ततो विदितयथावृत्तोदन्तेन कृपानिधिना केनापि मुनिपुत्रेण समाश्वास्य महर्षेर्जमदग्नेराश्रमं निन्ये। तत्र तपोवनाश्रमे महतां तेजसां राशि मूर्तिमन्तं समाश्वासमिव स्थिरधृतिद शरीरिणमानन्दमिव विषादनुद सुप्रसिद्धयशस परशुरामजनकमयि वत्से मृगावति सहस्रानीकस्य प्रमोदाकर शश्वच्छशिवशयशोधरस्ते हृदयानन्दनो नन्दनोऽचिरेण जनिष्यतेऽद्यप्रभृति चतुर्दशसमासु व्यतिवाहितासु त्वद्भर्तृ समागमो निःसदेह भविष्यति मा स्म शोचीस्तत् स्वगृहस्थेव निश्चिन्ता तापसैरस्माभि सार्धमिह वीतशोका यथासुख निवास कुर्ष्वेतिवादिन जमदग्नि प्रणम्य तेन मुनिकुञ्जरेण यथोपदिष्ट तथैव कर्तुं मनश्चक्रे ततश्च दिवसेषु कतिपयेषु क्षपितेषु भर्तृविश्लेषातिदुःखितापि सौभाग्यवती भागधेयोदयशसिन पुत्र सुभगा कौशल्या

दाशरथ रघुनन्दनमिव समस्तराजलक्षणशोभितं सुषुवे । तस्मिंस्तनयरत्ने जाते तदानी गगनसंभवा शुभयु सरस्वती समुद्बभूव यत् सकलजगद्वन्द्यामितप्रभादेदीप्यमानशाश्वतिकमूर्त्यो. सूर्यचन्द्रमसोरुदयमहीध्रेऽवाप्तश्लाघनीयजनुः शशाङ्कवंशोदयहेतुरयं शिशुर्भाविसार्वभौमो नाम्नोदयनो भूयादिति । ततः कालेन जमदग्निना स्वय निष्पादितराजन्योचिताविकलसंस्कारविधिर्मातुराशाबन्धो बालशशाङ्कस्तन्मनोरथशतैरात्मनश्च प्रशंसनीयसदाचारशीलगुणै साकं प्रववृधे क्रमाच्च मुनीन्द्रग्राहितश्रुतिधनुर्वेदराजनीतिपुरस्सराशेषशस्त्रशास्त्रविद्यागमकृतमुखो नानाविधदुरधिगमकाव्यार्थपरिशीलने निष्णातो विपश्चिद् बहुप्रकारसांग्रामिकायुधप्रयोगेऽपि कुशलोऽतनुवीर्यं आयुधीयश्च भूत्वा पितामहनीकाशस्य करुणावात्सल्यार्द्रार्द्रचेतसो जामदग्न्यजनकस्य वत्सवत्सलाया जनन्याश्च नयनानन्दनः संववृते । अथ कदाचिन्मृगव्यरसाकृष्टो राजपुत्र उदयनः कृष्णसारादिमृगयूथबहुले कानने पर्यटाव्यमानो वनेचरेण निषादेन गृहीत रज्जुसंदानितरज्ज्वाकारवपुषं दुर्गतं सरीसृपं निशाम्य भो. पुलिन्द प्रचुरेषु श्वापदेषु त्वद्ग्रहणयोग्येष्वत्र वर्तमानेषु तुच्छेनानेन भुजगेन किं प्रयोजनमतो मुच्यतामय कृपण इति तमूचिवांस्ततश्च हे क्षत्रियबालक यावदेष. काकोदारोऽकिञ्चनस्य मम केवला जीविका भवति तावत् कथमेनं परित्यजामि निर्धन सर्पाजीवः सर्पविदहमस्मीति तेन प्रत्युक्ते कृपाविष्टमना वदान्यो निजमातृविश्राणितं सहस्रानीकनृपनाममुद्रितं मणिबन्धभूषणं प्रकोष्ठादवरोप्य तस्मै

दत्त्वा तं दर्वीकरं मोचयामास । गृहीत्वा मणिखचितसुवर्णकटकं सहर्षमन्तर्हिते तस्मिञ्शबरे स चक्षुश्रवास्तत्क्षणात् सुन्दराकृतिना नागेन परिणतोऽग्रतो बद्धाञ्जलि साष्टाङपात दण्डवत् प्रणम्य प्रीतिविकसितवदन प्राणद सोऽहमस्मि धृतराष्ट्रात्मज किन्नरो नाम कामरूपो नागो ब्रूहि दासोऽह् किं ते मदीयजीवितसमुद्धर्त्रे प्रियमुपहरामि सुदृढ बध्नीप्राव शश्वदविनश्वर सस्य शुभोदर्क शुभशकुनेऽद्यैहि सखेऽस्मदधिष्ठितलोक रसातल ते दर्शयामीति कृतज्ञताप्रदर्शनपुरस्सर निगद्य तं राजमूनुं पातालमनन्तवैभवसमृद्ध निनीवांस्तस्मै राजोचितसपर्योपहारपूर्वक नागलोकचन्द्रिका मनोभवलीलापुष्पाजलि मत्तकाशिनी ललितासज्ञां ललितरूपा स्वसारमर्पयाम्बभूव ।
ततः प्रियासहवाससुखितेषु तेषु तेषु वासरेषु हृदयगमसुरतमहोत्सवमयेषु व्यतीतेष्वथ भ्रूणोत्पत्तिसमयावधिकशापशृङ्खलितायां भार्यायां ललितायां गर्भमाधाय भर्तृप्रमुख बन्धुसुहृज्जनमामन्त्र्य निजं विद्याधरीपदं पुनरुपगताया नृपतनय उदयनोऽपि रसातलाधिपेन समर्पितामम्लानताम्बूलीसुमनोमालाघोषवतीवीणासमन्वितामुपायनसामग्रीमादायोदयगिरिस्थतपोवनाश्रमपद प्रतिजगाम तच्चासाद्याभिमन्यु सुभद्राया इव दिव्यदृष्टिना मुनिपुंगवेन सान्तेवासिना ते पुत्रकोऽद्य वा श्वो वा नूनमागमिष्यतीति सानुकम्पं समाश्वास्यमानायाः पुत्रतिरोधानद्विगुणीकृतभर्तृविरहशोकानलदन्दह्यमानसुकुमारहृदयकुसुमाया दिवसान्येतानि कुतस्तस्थिवास्त्वमिदानी चिरादागतोऽसीति सनिन्दमिव वदन्त्या मानुरतृप्तायां

दृशि पीयूषधारामभिवर्षन् यथासंवृत्तमात्मन इतिवृत्त प्रश्रयरणपूर्वं निवेद्य समुनि ता वीतशुच विदधौ। तत्रान्तरे स आटवीक सर्पाजीव स्वजीवनसमयेऽप्राप्तपूर्वमपुन.प्राप्य महामूल्य जाम्बूनदरत्नवलय समादाय दरिद्रमपि सहसा महाधनीभूतमिवात्मान समर्थयमान· सहृष्टमना. किमेतत् सत्यमथवा मायामयं किं मया मृगतृष्णिकाम्भसि न स्नातमुताहोस्विन् मया शशशृगमयं कार्मुकं न धृतं, नैवं, मन्ये, दूरे तावत् तिष्ठतु विचिकित्सा यथा सर्वमिदं तत्त्वतस्तत्र कानने प्रत्यक्ष समुत्पन्नमिति भूयो भूयः प्रत्ययार्थं तन्मणिबन्धभूषणं यथातृप्ति दर्शं दर्शं सप्रमोदविस्फारितस्मेरलोचनो यथाशीघ्रं सुवर्णकारापणे तद्विचिक्रीषुर्महानगरी कौशाम्बी प्रति प्रतस्थे ततश्च कियति काले समतीते द्राघीयांसमध्वमार्गमतिक्रम्य कौशाम्बी प्राप्य क्वचिद् विपणौ सुवर्णवणिजे तददीदृशत्। दृष्ट्वा महाराजसहस्रानीकनामाङ्कितं चामीकरमणिकङ्कणं सपदि शङ्कादोलारूढोऽसौ कनकव्यापारी तं नि स्वमपि बहुमूल्यवलयविक्रयार्थिनं वनेचरं गृहीत्वा राजभवनं गत्वा सर्वास्थानस्थाय वसुधराधीश्वराय विज्ञापयाञ्चकार। अथ हृदयवल्लभाकोमलभुजलतासंसर्गसुभगं मणिकङ्कणं हस्ते कृत्वा दुर्विषहतद्विप्रलम्भसंतापातिशयतनूकृततनु· प्रखरनिदाघपरितापितो मेघनादानुलासी मयूरो जलादागमोन्मुख इव प्रेयसीसमागमोत्कलिकाकीलितहृदयो विरही सहस्रानीकः किमपि किमपि विचार विचारमहो किं नु खलु चतुर्दशसमा दुस्स्वप्नपरम्परा इव व्यतिवाहितप्रायाः संवृत्ता

इति सदोर्धनिःश्वासमुदीर्य भो सुमते वनेचर नाहं निर्धन त्वां दण्डयिष्यामि वद कुतोऽस्य बलयस्यागम इति सानुरोध स्वय तं भीतभीत पप्रच्छ तच्छ्रुत्वा च दण्डवत् प्रणति कृत्वा तेन मातंगेन सर्वजनाश्रयद महाराज याथातथ्यवादी नाह तस्कर इति प्रस्तुत्य सविस्तरमुदयाचलकानने दीर्घपृष्ठग्रहणादारभ्य सवृत्ते सुवर्णमणिकङ्कणलाभोदन्ते सादरं विज्ञप्ते वासरशेष कृच्छ्रादतिवाह्य सम्यक्सज्जीकृतदीर्घप्रयाणसभार उत्तरेद्युः प्रातस्तरा मन्त्रिपरिजनपरिवारितश्चतुरङ्गवरूथिनीकृतानुयात्रः शुभ्रौपवाह्यारूढ प्रायश प्रक्षीणतिलोत्तमाशापावधि स मृगावतीजानि पुरतो मार्गदर्शकेन तेन राजातिसृष्टपारितोषिकपरितोषितेन शबरेण नेनीयमान उदयशिखरिप्रयाणमार्गे तस्थौ। समतिक्रम्य विप्रकृष्टमध्वान भूभृदसौ प्रदोषे समायाते कस्मिंश्चिद् वनपद्माकररोधसि समुत्थापितशिबिरस्तत्र ससैन्यपरिवार प्रयाणजनित परिश्रममपनेतु शय्यागतोऽपि प्राणसमासगमोत्कण्ठापसारितसुषुप्सः शय्यायामित तत परिवर्तमानो विनिद्रश्चतुर्दशवर्षाणि तया विनाकृतत्वादतिभृशोत्कण्ठितचेतोवृत्ति साभिलाप तामनुदाध्यायमानो यावदासाञ्चक्रे तावत् सपर्यायै कथोपाख्यानकोविद सगमको नाम कथिको राजनिवेश प्रविवेश प्रविष्ट च तमुद्वीक्ष्य स्वागत ते सगमक कथय वहुहायनविश्लेषितमृगावतीपुन समागमसुधारसास्वादनर्पुलाय मे किञ्चन वियोगमतप्तमनोहर्षयितृ कथानकमित्युवाद । आयुष्मन् किमर्थ मुधा परिखिद्यसेऽद्यश्वीन सन्निकृष्ट

देवीसंगम विद्वानपि, ससारचक्रेवत् सयोगवियोगचक्रमप्यनारतं परिवरीवर्ति सयोगा अपि वियोगोदर्का वियोगा अपि संयोगावहा बोभूवत्यत्र निदर्शनरूपमुपाख्यानमाख्यामि शृणु यदि ते रुचिरिति प्रस्तावं कृत्वा स कथिको वक्तुमुपचक्रमे विश्वंभरानाथ भारतवर्षमध्यमभूमण्डलमण्डणभूतेषु मालवेषु बभूवतुः पुरा कुलिनावनवद्यविद्यासद्गुणसंपन्नावग्रजन्मानौ कालनेम्यभयनामानौ परस्परानुरक्तौ भ्रातरौ तयोश्च पूर्वज कालनेमिर्वैभवसमृद्धिवाञ्छया होमयज्ञैर्विष्णुवक्षस्थलसुखविहारिणी लक्ष्मी सततमारराध। अथ तद्विहिताविच्छन्नाग्निहोत्रसंतोषिता सा श्रीः साक्षात् प्रादुर्भूय तमभिदधे कालनेमे प्रीतास्मि लप्स्यसे विभूतिं च महीभुजमौरस्यं च मम वरात् परन्तु यतस्त्वं मदर्थे तृष्णाकलुषितेन मनसा हवींषि जातवेदस्यहौषीस्ततोऽन्तिमे मलिम्लुच इव त्व निस्तर्हणं प्राप्स्यसीति। तत कनीयसि भ्रातरि जनपदान्तरं गते कालेन कालनेमिर्लक्ष्मीप्रसाराद् धनाढ्यो भूत्वा सुतमपि लब्ध्वा च श्रीवरादवाप्तोऽय मे पुत्रक इति श्रीदत्तसज्ञा तस्य चकार। क्रमाद्वयसा विद्याभ्यासेन च वरीवृध्यमानोऽसौ प्रत्यग्रतारुण्यविकस्वरचक्षुष्यवर्ष्मा विप्रपुत्रोऽपि सन् वृकोदर इव शस्त्रप्रहरणेषु नियुद्धेषु चाप्रतिद्वन्द्व श्रीदत्तस्तद्रूपविद्यागुणबाहुबलप्रीतेन गुणज्ञेनापि दोषज्ञेन तत्रत्येन नृपेण वल्लभशक्तिना निजतनूजस्य विक्रमशक्तेर्मित्रता गमितो राजकुले वसतिं विदधौ तस्य च बभूवुस्तदीयातुलभुजवीर्यनिर्जिताः प्रकृष्टतच्छीलसौजन्याकृष्टमानसा बाहुशालिप्रभृतयो

बहव. सुहृदो येऽविकारेण मनसा शरण्यमिव त नित्यश समाशिश्रियिरे । अथ जातु वारिवाहागमप्रमुदितसकेकारवोत्कंधरशिखण्डिशिखण्डताण्डवमनोहरीषु प्रियसगमोत्सुकप्रोषितभर्तृकाचित्तप्रमाथिनीषु वर्षासु राजसूनुसख श्रीदत्त क्रीडारसासिस्वादियाहूतनैतोभिर्वयस्यगणै स्म तरगिणीकूले क्रीडितु किल निर्जगाम तत्र च पुलिने समवेत्य ये विक्रमशक्तिवशंवदा अनुचरास्ते त राजकुमार कृत्रिमराज विदधुर्ये चान्ये श्रीदत्ताधीना वयस्यास्ते त स्वीय कृतकराज कृत्वा सुख विहर्तु प्रारेभिरे । तावन्मात्रेण सजातेर्ष्यामर्षविकृतवदनो दूरीकृततितिक्षोऽसहिष्णुर्विक्रमशक्ति सभ्रूभग युद्धाय श्रीदत्त तूर्णमाहूय तेन सह दण्डादण्डि बाहूबाहवि च नियोयुध्यमान प्रबलदोर्दण्डशालिना तेन पङ्किले वालुकातले सावहेलं साष्टाग निपातित सन् प्रज्ञाचक्षुस्तनूसंभव ईर्ष्यालुरमर्षणो दुर्योधनोऽतुलपराक्रमस्य भीमस्येव तस्य श्रीदत्तस्योपाशुवधे ह मनो बबन्ध । विज्ञाय पापस्य तस्य निकृष्टहिंस्राशयं तत्क्षणमेव निजमित्रवृन्दकृतानुगम. श्रीदत्तो रहस्तत्सकाशात् कादिशीक इवाल्लायापससार दूरवर्तिन च विदेश गच्छस्ततो मध्येगग झञ्झावातसक्षोभितकल्लोलकम्पिता गतिहीना नावमिव तरगितप्रवाहवेगजेह्रीयमाणविग्रहामबलामबला मा परित्रायस्व परित्रायस्वेति तारमाचाक्रन्द्यमानामारादवलोक्य ता समुद्धर्तु कालक्षेपामहिष्णुर्द्रागवारिमध्येऽवगाह्य तां केशेषु जिघृक्षुर्निमग्नामनुसृत्य निममज्ज ततश्च क्षणान्तरे शांभव दिव्यायतन तत्र च

पारिजातादिकुसुममाल्यैर्घ्राणतर्पणसौगन्ध्यवाहिभिर्मञ्जुलैःस्तुतिशतैश्च श्रवणसुभगैस्त्रिपुरान्तक वृषध्वजं संपूजयन्ती तामेव स्त्रियं ददर्श न पुनर्वारिप्रवाहम् । सुधांशुमौलिं खण्डपरशुं सभाजयित्वा पेशलपारितथ्यालंकृतधम्मिल्लपाशा हीरकमयकुण्डलयुगलविभूषितकर्णपाली मुक्तावलीपरिष्कृतपीनोन्नतकुचस्थलशोभिनी तुहिनधवलाप्रपदीनकौशेयांशुकसंवीतसर्वांगाभिरामा सविभ्रमचरणन्यासकलकलकूजितहंसकमनोहरी मूर्तिमती लावण्यसंपदिव हंसगामिनी सा ललना दिविषदीश्वरहर्म्यप्रतीकाशं शातकुंभरत्ननिर्मितं चतुरस्रविराजित समुच्छ्रितमन्दिरं स्वकीय प्रविश्य दर्शनीययोषित्सहस्रपरिवारिता मणिपर्यंके निषसाद । अनुसृत्य ता सोऽपि तत्र प्रविश्य किमेतद् वासु का त्व किमर्थमत्र सुमहदाश्चर्यबहुले गामानैषी सुदति गोप्यमत्र न चेत् तर्हि कथ्यतामिति सानुनयमनुयुयुजे । श्रुत्वा तद्वच. कण्ठनिरुद्धबाष्पगद्गदं सा निजगाद श्रूयतां यदि कौतूहलमेषाहमस्मि सुरवैरिणामधिनाथस्य विरोचनस्य कन्या विद्युत्प्रभा नाम मन्दभागिनी पुरा श्रीवत्सलाञ्छनो विष्णुः स्वानिष्टकारिणमस्माकं पितरं पशुमारमवधीत् ततस्त्वास्मान् नगरान्निर्वास्य पुरप्रवेशप्रतिरोधकमचलोपममहाकायातिघोर केसरिणमन्तरालेऽतिष्ठिपद् येन नो हृदयानि पितृविनाशशोकसंतप्तान्यपि खलु परिशोशुष्यन्ते हे मनुजवीर प्राग्धनदशापात् सिंहभावं प्राप्तो यक्षोऽस्मत्पुरी संनिरुणद्धि धृतसिंहरूपो यस्य शापपर्यवसानं नून भविष्यति यदा स मनुष्येण हनिष्यत इत्यपि गरुडध्वजेन तेन

स्त्वयमवादि तस्माद्धे अप्रतिमवीर्यवन् न शत्रुपाशो मृगरिपुस्त्वया विशस्यता केवलममुमर्थमपेक्ष्य मायाप्रभावेन त्वामत्र समानैषं निहतात् तस्मात् केसरिण सर्वलोकसुदुर्लभो निशितधाराप्रभास्वरश्चन्द्रहासस्त्वयोपलप्स्यते यन्महानुभावेन कृत्स्ना मही साकल्येनात्मसात् कृत्वा भूमिपालोऽवश्य भविष्यसि नात्र कोऽपि विचिकित्सालव इति। तथैव करिष्यामीति निगद्य महावीर. श्रीदत्तो दैत्ययोषिद्भिर्दर्शितमार्गो निर्गत्य दानवपुरसंरोधकं विततास्यदर्शितभीषणदंष्ट्रं गर्जन्तं महासिंहमकुतोभयोऽसिधेनुप्रहारेण बलात्कारेण जिहिंस तत्समनन्तरं च गृहीतशोभनपुरुषरूपात् कुबेराभिशापमुक्तिसंतुष्टात्तस्मात् सर्वश्रेष्ठखड्गरत्नमवाप्य कृतज्ञया विद्युत्प्रभया सबहुमान विश्राणित सर्वाकारविपध्नमंगुलीयकमुररीकृत्य च यथागत भागीरथीतट निर्ययौ। निर्गत्य जाह्नवीसमीपवर्तिनि पथि गच्छन् सुहृद्विरहातुर निष्ठुरकाभिध वयस्यमवलुलोके त च गाढमालिंगच विदितस्ववृत्तान्त कृत्वा वान्धवमित्रगणोदन्त पप्रच्छ। तेन पृष्टो निष्ठुरक सविषाद व्याजहार त्वयि भीष्मसूजलान्तरेऽन्तर्हिते कालधर्मपाशाकृष्टे राज्ञि वल्लभशक्तौ कथाशेषीभूते चामात्यै सभूय तत्सुतो विक्रमशक्तिर्भद्रासनमारोपितोऽपरेद्युस्त्वद्विरनिर्याननाशयान्धीभूतस्तव पितुरन्तिक गत्वा साटोपं तमप्राक्षीत् कालनेमे कुत्र वर्तते ते पुत्रापसद इति तद्गर्जितमाकर्ण्य जनकेन विक्रमशक्ते क्वापि प्रयातस्य मे पुत्रकस्य महान् काल समतिक्रान्तस्तथापि मन्दभागोऽह तस्य प्रवृत्ति न जानामीति प्रतिवचने

दत्तेऽमर्षमन्युरक्तीभूतनेत्रः सोऽभिनवलक्ष्मीमदमत्तो नृपकीटोऽनेन नून श्रीदत्त कुत्रापि गोपित. स्यादिति मनसि विधाय चौरवत् त्वा ते जनकं न्यसूदिष्टेति। आकर्ण्यैतदकाण्डवज्रनिर्घातकल्पं नितान्त-निर्विण्णमना सुहृद्गणसंगमार्थमुज्जयिनीं यियासु श्रीदत्तो निष्ठुरकेण सह प्रस्थितो दुर्लभमनुष्यसंचार गहन कान्तारं प्राप्य तत्र सशोकं रुदन्ती कामप्यगना दृष्ट्वा सायकाले शोककारणं तां सदय पप्रच्छ। एकाकिनी मालवजनपद गन्तुकामाहं प्रचरन्ती दिङ्मोहभ्रष्टमार्गास्मीति तयोक्ते श्रीदत्तो न भेतव्य न भेतव्यमिति तामाश्वास्य तया सम कस्मिंश्चिन्निर्जने मन्दिरे निशीथिनी क्षपयितुं प्रविवेश। अथार्धरात्रे दुःस्वप्नप्रबोधितो युगपदुत्थाय श्रीदत्तो प्रियवयस्यं निष्ठुरकं निहत्य तत्पिशित यथारुचि बुभुक्षितां सिंहीमिव भक्षयन्तीमूर्ध्वकेशकरालदंष्ट्रां रात्रिचरी दृष्ट्वा राजराज-शापमुक्तयक्षोपहृतं प्रदीप्तद्युति त करवालमुद्धृत्य ता क्रव्यभुजं केशेष्वतिदृढ गृहीत्वा रे रे निस्त्रिंशे तेजितनिस्त्रिंशरसमिदानी-मनुभवेति सरोषमाक्रुश्य यावत्तस्या. शिरश्छेत्तुमुद्युयुजे तावत् सुघोरं राक्षसीरूपं सहसा विहाय धृतदिव्यविग्रहा सा पुलकितमानसा त श्रीदत्तमभिबभाषे महानुभाव करुणानिधे मुञ्च मा नाह राक्षसी पुरा प्रभुणा त्र्यम्बकसखेन कुबेरेण तपोधनस्य कौशिकस्योग्रतप-श्चर्याविघ्नार्थं प्रेपिता यक्षी तेन क्रुधा शप्ता रजनिचरी भूत्वे-दृश्यामवस्थायां जुगुप्सितायामभ्रशं किन्तु साम्प्रतं त्वदीयहस्त-सम्पर्कावधिके कौशिकशापे दिष्ट्या त्वत्करकमलस्पर्शेन परिसमाप्ति

गतेऽलकारपुरी जिगमिषामीत्युक्त्वा भक्षिन मित्रं पूर्ववदक्षतशरीर विधाय झटित्यदर्शनमियाय। दृष्ट्वा मृतजीवितं सुहृदं निष्ठुरकम-त्रिविस्मयकोटिमारूढो रोमाञ्चितवपु श्रीदत्त सूर्योदये तेन साकं पुनरध्वमार्गे पद न्यास ततश्च कालक्रमेणोज्जयिनीमासाद्य सुहृदां सर्वेषा प्रमुदिताना नेत्रयोरमृतनिर्झर दृष्टिपातेन प्रवर्षन्निव मित्रेण बाहुशालिना प्रचुरस्नेहबहुमानपुरस्सरं स्वनिशान्तमानीतोऽद्भुताश्च-र्यरसनिस्यन्दि स्वीय वृत्तान्तजालं निरन्तर कथयित्वा तै सह यथासुख तत्रोवास। ततो जातु मधुरमधुपाननिरतमधुलिट्कुल-झंकारनिनादितमञ्जुलवञ्जुलबकुलवासन्तीपुष्पगुच्छपरिमलभरित-दिगन्तराले सर्वदमाधिज्यकार्मुककुसुमायुधपौष्पशरशरव्यभूताभिन-वयौवनमदमत्तायुवयुवतीजनकोमलहृदयाकुरप्रह्लादिनि मधुरमधु-समये वसन्तोत्सवयात्रादिदृक्षावर्जितचेता प्रत्यग्रतारुण्यविकसि-तस्मिताननः श्रीदत्त सहचरैः सह निर्गत्य सर्वतो विकसितविचित्र-पुष्पमञ्जरीप्रफुल्लरुचिरालोके चिरप्रतीक्षितवसन्तागमप्रमुदित-नानाविहंगमकलकूजिते लीलोपवने सुख विहरन् मलयजसुगन्ध-वाहदक्षिणवायुदरविलोलकौशेयमृदुलकेशहस्ता नवयौवनविकस्वर-चारुवदना देहिनी मधुश्रियमिव लावण्यसागरस्य कौमुदीमिव शृङ्गाररसस्योत्पत्तिभुवमिव पुन पुष्पधन्वनो भार्यामिवानुत्तम-रूपसपदभिजनभूपामिव दरीदृश्यमानामुज्जयिनीनाथस्य नृपस्य बिम्बकेस्तनूद्भवा मृगाङ्कवती निर्वर्ण्य सपदि गम्भीराया मनसि-शयवागुराया निपपात। सापि राजदारिका मन्मथावतारमिव

सुदर्शनमतनुतेजस श्रीदत्तमुद्वीक्ष्य पञ्चशरशरव्यतामेकपदे गत्वा तं प्रति दुर्निग्रहमनोभूसंपीडिताघटितमिथुनघटनाप्रवीणा मकरध्वजशासनसदेशहरीमुभयवेतना दूतिकामिव प्रथमानुरागशसिस्निग्धविभ्रमविलसितामपाङ्गदृष्टिं मुहुर्मुहुः प्रेष्य गतागतं कारयामास । इत्थं सहसाविर्भूतप्रत्यग्रप्रेमभारव्याकुला मनोज्ञवासन्तीकुसुमातिकोमलाङ्गयष्टिं तां तीव्रविषधरो दन्दशूकोऽकाण्डे भयानकयमदंष्ट्रातीक्ष्णाग्रैर्दशनैर्ददंश तत्क्षणाच्चोद्दामगरलवेगापहृतसंज्ञां भर्तृदारिकां दृष्ट्वा हा हा अब्रह्मण्यमब्रह्मण्यमहो कष्टं मन्त्रौषधीविदो राजभिषजः क्षिप्रमाहूयन्तामाशीविषदष्टां विनष्टचेतनामस्माकं बहुमतां राजपुत्रीमायुष्मतीं परित्रायध्वं परित्रायध्वमिति संभ्रमज्वलिताना किंकर्तव्यतामूढचेतसामाकस्मिककुलिशघातसंनिभविषमविषधरव्यसनातिभृशविक्लवाना परिचारिकादीना युवतीनामाक्रन्दविक्रोशनव्यतिकरे कोलाहले सोरस्ताडनं समुत्थिते निमेषमात्रविलम्बासह. श्रीदत्तोऽयमयमागच्छामि विषवैद्य इत्याक्रुश्य वयस्यान्वितो मङक्षूपेत्य गरलापहमन्त्रजपनसमकालमेव तस्या अङ्गुल्यामसुरकन्याविश्राणितं तदङ्गुलीयकमाधाय कपटजाङ्गुलिकोऽपि सन् विषघ्नांगुलीयकप्रभावेनैव तां मृतकल्पा समुदजिजीवत् । एवंगते व्यतिकरे विदितसरीसृपव्यसनप्रवृत्तिः स्निग्धदुहित्रवस्थादर्शनोत्सुको भार्यासखस्तत्र द्रुतमागत्य राजा बिम्बकि स्वस्था तां दृष्ट्वा च वीतज्वरः श्रीदत्तमहिमस्तुतितत्परो भृशं जहर्ष तदनन्तरं च प्रतिनिवृत्य प्रीत्या प्राज्यकाञ्चनादिकं पारितोषिकं निजसुताजीवितप्रदाय तस्मै यूनेऽतिमसर्ज ।

तल्लब्ध्वा सोऽपि मित्रवृन्दसहितस्यात्मन आश्रयदायिने स्वजनयितृसमाय विश्रम्भपात्रस्य बाहुशालिन पित्रे तत् सर्वं ददौ। ततो दुर्निवारमीनकेतनजनितहृदयशोषणपरितापसतताप्यमानवपुषि दुरुद्वहावस्थान्तरगते तस्मिञ्छ्रीदत्ते कान्ताध्यानतत्परेऽत्यर्थं दुर्मनायमानेऽपि सौम्य तदानी तीव्रदर्वीकरविषवेगाद् दिष्ट्या त्वया परित्रातापीदानी तव तुल्यावस्था सा मे प्रियसखी मृगाङ्कवती मदनदर्वीकरदष्टा मोमूर्च्छ्यमाना जीवितसशये वरीवर्ति प्राणप्रदस्त्वमस्या प्राणप्रिय. स्वयवरभर्तापि भवान्यथा सा पुरा जीवलोकादस्मादसशयमेव तिरोदधातीत्येवमादि तदङ्गुलीयकप्रत्यर्पणव्यपदेशात् तत्सकाशमागत्य तस्या विश्वासभूमिर्भावनिका नाम सहचरी तस्मै न्यवीविदत्। एव गते ते सर्वे श्रीदत्तबाहुशालिप्रभृतय सुहृदस्तत सम्भूय वय राजतनयामुपाशु युक्तितोऽपहृत्य गूढावसथार्थं शीघ्रं मथुरा यास्याम इति तया भावनिकया सह रहसि समन्त्र्य यद्यत् प्राप्तकाल तत्तत् समग्रमनुतस्थु। ततो निशीथे कन्यान्तःपुरगर्भवेश्म युगपदग्निसात् कृत्वा धृष्टनायक श्रीदत्तः सखीद्वितीयां मृगाङ्कवतीं तैर्वयस्यैस्तत्क्षणमेव मथुरापत्तनमग्रतोऽनीनयत् ततश्च यथाममयमुत्तरेद्यु पृष्ठत स्वयमनुसरन् मार्गे मार्गणक्षतवपुष दुर्गता भावनिका दृष्ट्वोत्थाप्य विस्मितमना किमेतदित्यन्वयुक्त। एव पृष्टा सा राजदुहितु सहचरी सनिर्वेद प्रत्यभाषिष्ट किं वदामि हतभाग्या तथापि श्रूयता भूमिपालेन प्रेषितैरश्वारोहैर्बहुभी राजन्यैस्तत्रदी-

यान् वयस्यान् क्षीणपुण्यां मा च निशिताग्रविशिखाभिवर्षणैर्निपात्य मदीया वयस्या मृगाङ्कवती दूरमपाहारीति । अकाण्डाशनिप्रहारसन्निभं वृत्तान्तमाकर्ण्यातिमन्युसंक्षोभितान्तरङ्गोऽतुलविक्रमः श्रीदत्त इतस्ततो भूतले निपतितास्तान् सुहृद. प्रत्यक्षीकृत्य शरव्रणशोधन तेपा सम्यग्विधाय चातिशयामर्पानलप्रदीप्तनयनो जवनहयारूढस्तत् क्षत्रियाश्वीयमनुधावन् दिव्यशक्तियुजा तीक्ष्णधारेण चन्द्रहासेन तान् सर्वान् राजन्यान् निहत्य जीवितसमां ता मृगाङ्कवती हस्ते चकार । अथ दुर्लभदयिताप्राप्तिसंहर्पपुलकितवपु. श्रीदत्तस्तस्या. प्रथमप्रियसगमरोमाञ्चितसर्वाङ्ग्याः प्रेमार्द्राधरामृतरस पाय पाय मथुराभिमुख. प्रियाद्वितीयो नीरन्ध्रवृक्षपंक्तिगहने कानने पदं चक्रे ततश्च यदा दूराध्वपरिश्रमपिपासाभिभूता प्रियतमा तृपानुद सलिल तमभ्यर्थयाबभूव तदा ता हरिणाक्षी तन्वङ्गी छायाद्रुममूले समुपवेश्य स तोयं गवेपयितु सर्वत्र कान्तार परिबभ्राम । एवंकारमुद्विग्नमनसि पानीयलिप्सया विश्वत परिचङ्क्रम्यमाणे तस्मिन् सहस्रदीधिति कमलिनीकान्तः करसहस्रमस्ताचलशिखरे न्यस्य कमलिनीविप्रयोगशोकातुर इव [तिरोदधे तदनन्तर च लब्धरन्ध्रं सूचीभेद्यं. सान्द्रतिमिरैर्मु पितालोको लोकोऽनुच्छादयाञ्चक्रे । तदनु कृच्छ्रेणोपलब्धसलिलोऽपि स कामी श्रीदत्तोऽन्धकरणतमोजालजनितदिङ्मोहविनष्टवर्त्मा हा प्रेयसि क्व नु खलु ते वदनसरोरुह द्रक्ष्यामीति

नितान्तोद्भ्रान्तचेताश्चक्रवाकीविश्लेपितचक्रवाकवत् परमार्थतोऽरन्यैरुदितं कुर्वाण. कान्तारस्य विपादस्य च पर्यन्त ह न लेभे नीत्वा कथचित् ता निर्वेदातिरेकसहस्रयामायमानत्रियामां त्रियामा प्रातस्तरा यत्नतः सरणिमन्विष्य तमेव छायातरुमासाद्यापि दयिता मृगाकवती न ददर्श तदनु तत्कृपाणरत्न भूतले निधायेतस्ततस्तामन्वीक्षितुकामस्त विकटभूरुह् तूर्णमारुह्य कुत्रापि दृग्गोचरे तामलब्ध्वा तद्विरहविवश सशोक प्रमुक्तकण्ठ रुरोद । अत्रान्तरे कोऽपि करालाकृति किराताग्रणीस्तेनैव वर्त्मनाकस्मादागत्य तरुमूले निहित सर्वलोकदुष्प्राप दीप्तद्युति त कौक्षेयकमुद्धार तं च धृतानर्घचन्द्रहास पुलिन्दमवलोक्य सपदि वृक्षादवतीर्य भो वनेचर यौवनारम्भस्था सुतनूर्वनस्पतिमूलेऽत्रासीना मेऽसुसमा त्वया कि नु दृष्टेति सोत्कण्ठमप्राक्षीत् । एव पृष्टेन तेन दिवाकीर्तिना हे सौम्य मदनुचरै किरातैस्तव भार्या वनपल्लिका नीता तदितो मार्गेणानेनास्मद्गेह याह्यनुपदमागत्येम तेऽसि प्रतियच्छामीति सवितर्कमुक्ते प्रियतमादर्शनप्रत्याशासमाश्वासितमानस श्रीदत्तः परिखेदपरिस्खलितचरणन्यासोऽपि तै शबरैर्नीयमानो वनेचराधिपस्य वसतिं प्राप्य सुभग परिश्रान्त इव दृश्यसे यावद् वय बहिर्गत्वा ते हृदिस्थामिहानयामस्तावन्मुहूर्त विश्रान्तिसुखमनुभवेति तैरुक्तो दीर्घकालमृगाङ्कवतीपर्येषणापरिक्लेशेन नितरां पराभुतत्वादुद्दामसुपुप्साग्रस्त. सन् क्षिप्र सुष्वाप । समयेऽतीते कियति सुप्तप्रबुद्ध स कठोर लोहशृङ्खलानिगडितहस्तपाद बदिग्राह गृहीतमात्मान दृष्ट्वातिवि-

स्मयव्याकुल. किमेतदकाण्डे सजातमहो महदत्याहितमित्याचुक्रोश तं चैतदवस्थं दुर्गतिपतितं तपस्विनमुद्वीक्ष्याप्रतिमतदाकृतिसौन्दर्यावर्जितान्तरात्मा किराताधिपपुत्री सर्वकप मकरध्वजपुष्पबाणविद्धहृदया सती सविलासापाङ्गवीक्षणपुरस्सर तमभिदधेऽङ्ग कस्मादत्र मरणायायातोऽसि पुलिन्देश्वरो मे जनकश्चण्डिकोपहारार्थं त्वा युक्त्यातिसधाय समानैषीत् किन्तु कार्यान्तरगौरवादद्य जनपदान्तर प्रति प्रस्थित कियति काले समतिक्रान्ते प्रतिनिवृत्त्य सज्जीकृतपुरुषमेधसभारो रुद्राण्यै त्वामुपहारीकरिष्यति सौम्य प्रथमदर्शनमात्रसजातप्रेम हृदय मे त्वयि सुतरामनुरज्यते यतो मन्मथातुरा मा भजस्व ततस्ते योगक्षेममपि नून सजनिष्यत इति । श्रुत्वा तद्वाक्य गत्यन्तराभावाद दयितमृगाङ्कवतीसमागमोत्सुको वन्धनान्मुमुक्षुरसौ युवा गान्धर्वविवाहविधिना तत्क्षणमेव मृदुहस्तसवाहनपुलकितचुचूकाभिरुचिरपीनस्तनीमतिशयहृदयगमनिधुवनरसकुटिलीकृतपेशलाङ्गी शवरराजकन्या ता वरारोहामारुह्यातिवेल परिचुम्ब्यन्नुपयेमे । ततः प्रभृति सततप्रत्यग्रीभूतोल्वणस्नेहपीयूषधारापूरितहृदयकूपा सा सुन्दरी प्रतिरात्र स्वयमपाकृतचरणनिगडेन तेन तरुणेन साक प्राज्यसुरतमहामह यथातृप्ति निर्विवेश क्रमाच्च सापन्नसत्त्वा भूत्वा क्रोधालो पितुर्गृहागमनसमये सन्निकृष्टे कान्तविरहासहापि परस्परपुन सङ्गममभय विधाय कामुक त सर्वथा वन्धनादमूमुचन् । अथ चिराद् विमोचितशृङ्खल. स कामी हे सुभ्रु यो मे दिव्यचन्द्रहास. पित्रा

तेऽप्राहि त मे सर्वस्वकल्प यथाकथंचिद्धस्तेकृत्य पुनर्दर्शनसमये सुरक्षित मे दत्स्व साधयाम्यधुना स्वस्ति तेऽस्त्विति ता किरातकामिनीमभिधाय कान्त न कर्हिचिदप्यय जनो विस्मरणीय क्षेमकरा शुभयवस्ते भूयासु प्रयाणपन्थान इति तस्या आशीर्वादमप्युपलभ्य मृगाङ्कवतीपरिमार्गणाय द्रुत प्रतस्थे। यत्र छायाभूरुहतले पिपासातुरा प्रियतमोपवेशितपूर्वा तत्रैव पुनरागत्य स विरही पुरतो यदृच्छयागच्छन्त प्रवयस मृगयु दृष्ट्वा भो व्याध किं त्वया यदृच्छयापि नवयौवनारूढा नीलसरसिरुहलोचना वरवर्णिनी मे कान्ता क्वाप्यदर्शीति प्रेयसीप्रवृत्ति त सुमनसमप्राक्षीत्। किं त्वमेव श्रीदत्तनामासीति तेन लुब्धकेन सशङ्क व्याहृते पुनश्च स सोत्कण्ठ सस्पृहं चावादित् सोऽहमस्मि सौभाग्यपश्चात्कृत ईदृगवस्थ इति। सोऽपि वयोवृद्धो मृगाजीवस्तं प्रत्युवाद यदक्लेशार्हा काप्यभिजनरूपसपन्ना योषिच्छोकोद्विग्नमानसा क्रन्दन्ती मयात्राटव्या दृष्टा सापि दृष्टिगोचरे निपतित मामुद्वीक्ष्य किं मे जीवितनाथस्तेजस्वी श्रीदत्तो दृष्टो न वेति सविषाद मामन्वयुक्त ततस्तया सम्यग् निवेदितयुष्मद्वृत्तान्तः करुणाविष्टमना अह कथमपि ता सान्त्वयित्वेतोऽस्मत्पल्लिका निनीवास्ततस्तत्र दुर्विनीतेभ्यो रतिलम्पटेभ्यो भीतो मथुरा समया नागस्थल नाम ग्रामं चकितचकितां तां वराकी तत्र विश्वदत्तनाम्न सदाचारभूषणस्य विप्रस्य सद्मनि न्यासीकृत्य तामतिष्ठिपं तत् सुरक्षिता ता लब्धुं नागस्थल तूर्णं गच्छ। भृशमनुगृहीतोऽस्मीति सगौरव कृतज्ञतामप्रमेया प्रदर्श्य तस्मै प्राणसमाशीघ्र-

समागमोत्सुक संहृष्ट. स युवा तरसा प्रययौ ततश्च नागस्थले-ऽग्रहारेऽपरेद्यु: साय विश्वदत्तमुपेत्य श्रीदत्तोऽहमायुष्मन्तं सवर्णं त्वामभिवादये त्वदीये निशान्तेऽस्ति या मम जाया प्रवयसा मृगयुना सुरक्षार्थं न्यासीकृता तामवाप्तुमायातोऽस्मीति तमभिबभाषे। स्वागतं ते भो द्विजन्मन् मथुरापुरि मे मित्रवरो विप्रविपश्चिदग्रेसरो महाराजशूरसेनस्य मतिसचिवोऽभयो नाम तस्य हस्ते त्वदीयभार्या विविक्तेऽत्राग्रहारे ता सुष्ठु परिपालयितुमसमर्थो भूत्वा न्यक्षैप्समत एव प्रभाते तत्र त्वया गम्यतामद्य तु विभावर्यां मम वेश्मनि सुखमध्वश्रमोऽपनीयतामिति सोऽपि तमुवाच। प्रभाताया रजन्यां सुखोषित· श्रीदत्तस्त ब्राह्मणमापृच्छ्य दयितादिदृक्षाकृष्यमाणविरहपरितप्तमानस· पुनरध्वमार्गे पद चकार नचिरेण च मथुरामासादयाम्बभूव तदनु च दीर्घाध्वधूलिमलीमसदेहो गोपुराद्बहि प्रसन्नाम्भसि सरोवरे स्नानं कुर्वाणस्तत्र तस्करनिक्षिप्तमञ्चलग्रथितमहामूल्यमुक्तावलि पटच्चरं लेभे। तदादाय स युवा मथुरानगरी प्रविश्य यावन्मन्त्रिभवन प्रति प्रचचार तावद् राजपुरुषैस्तां मुक्तावलिमभिज्ञाय पाप पाटच्चरोऽयमिति संतर्ज्यमानो वराको राजाज्ञया वधभुव निन्ये। एष महापाप्मा मुक्ताहारचौरो वसुधाधिपस्यादेशादिदानी वधाय निग्रहस्थान नीयते ये केऽपि परस्व चोरयन्ति ते यथायोग्यं दण्डयन्त इति पृष्ठत· प्रहतमृदङ्गघोषपरैर्दण्डपाशिकै· पशुवदाकृष्यमाण पश्चाद्रज्जुसदानितबाहुं स्वप्नेष्वप्यविस्मृत दयितदयित जीवितेश्वर-

माराद् ददर्श तद्वियोगसंतापपरिक्षीणविग्रहा मृगाङ्कवती तं च दृष्ट्वा विस्मयशोकसम्भ्रमव्यतिकरव्याकुलीकृतमानसा ससम्भ्रमम-भ्यन्तरं गत्वा येनाहं दग्धदैवदुर्विपाकाद् बहुतिथ दुर्विपह कालं विरहिता यस्य च समागमाशया हतजीवितमा सप्रति कृच्छ्राददी-धर सोऽय मे प्राणनाथोऽस्मिन् घण्टापथे वधभूमिं नेनीयते दीनबन्धो मन्त्रिन्निति गृहस्थाय मुख्यमन्त्रिणेऽभयाय न्यवी-विदत्। श्रुत्वा तस्या क्रन्दितं सोऽपि मन्त्रिपुरोग कृपाकुल सन् राजकुलमेकपदे गत्वा राज्ञे याथातथ्य विज्ञाप्य विशसनात् तं मुग्धं व्यमूमुचत तत्समनन्तर च निजप्रियासगमाय त गृहमानीय यथावृत्तमितिवृत्तं सविस्तर पप्रच्छ। स श्रीदत्त कान्तापुनर्दर्श-नरोमाञ्चितवपु पादयो सस्नेह प्रणतायास्तस्या उपरि दृष्टि-सुधाधारामविरतमभिवर्षंस्तस्मै सचिवमुख्याय स्वजन्मनः प्रभृति संवृत्तं बहुविधिसकटसंकुलमात्मनो वृत्तान्तं विस्तरेण व्यजिज्ञपत्। हन्त भो पुत्रक स त्वमसि मे भ्रातुः कालनेमेरात्मजो भवेदानीम-नपत्यस्य मे पुत्रं इति सविस्मय सप्रहर्ष च व्याहृत्य शुभोदर्क-दिष्टिनियोगात् प्राप्त स्वचरणयो सविनयप्रश्रयपूर्ण प्रणि-पतित स्निग्धभ्रात्रेयमुदश्रुनेत्रो गाढं सस्वज्जे ततश्च पितृसमा-नवात्सल्यो नूतनपुत्रलाभसहृष्ट पितृव्यस्त पुनरुपाशु प्रोवाच यच्छृणु मदधीना राजराजस्यानुचरी यक्षिणी पञ्च सहस्रतुरगा-न्विताश्चामीकरमुद्रासप्तकोटी. सौहार्देन मह्यमशिश्रणत् तत् सकलमपुत्रिणो मे स्वापतेय तवैव सजातमित्यभिधाय च कति-

पर्यैर्दिवसैः प्राज्योपायनादिवैवाहिकसंभारनिर्भरेण विधिवदनुष्ठितेन महतोपयामेन तं तस्या लज्जानम्रितस्मेरवदनाया मृगाङ्कवत्याः पाणिं सानन्दमजिग्रहत् । एवं परिणीय तां शश्वद्वृद्धिस्था वल्लभा पितृव्यार्पिताक्षय्यविभूतिरसौ कालक्रमेण सौहृदपार्द्रचेतोभिर्बाहुशालिपुरोगैः सुहृद्भिरपि सङ्गतो बृहस्पतिसमबुद्धेः पितृव्यस्य प्रज्ञावैभवेन मथुराधिपस्य शूरसेनस्य पुत्रीमपि प्राप्य परमानन्दथुकोटिमधिरुरोह । ततो जातु कार्यान्तरवशाज्जनपदान्तरप्रयाणमार्गस्थः कस्यांचिद् विरलजनसंचारायामटव्यां प्रचरन् तरस्वी श्रीदत्तोऽकस्मात् प्रादुर्भूतैः शस्त्रोपजीविभिर्दस्युभिर्मार्गे प्रतिरुद्धोऽपि भयविवर्जित ऊर्जस्वलपराक्रमो दस्युसेनापतिप्रमुखान् प्रभूतसंख्यकाञ्शत्रून् प्रतिहत्य तदनु प्रबलामित्रशक्तिप्रहारमूर्च्छितो भयंकराकृतिभिस्तैरवशिष्टैर्दस्युभिर्दुर्गोपहारार्थं मनुष्यरुधिरशोणितवेदिकं घण्टानादप्रतिनादितं भीषणयमसदनसंकाशं रुद्राणीमन्दिरं निन्ये तत्र पुनर्लब्धसंज्ञः सपूजितसिंहवाहिनी पूर्वं गान्धर्वपरिणयविधिना स्वयं परिणीतां तामेव किरातेन्द्रसुतां प्रेक्षाञ्चक्रे । सापि तथाभूतं भर्तारमकाण्डे दृष्ट्वा पुनस्तत्समागतिप्रमुदिता तं नयनानन्दनं सुदृढं कण्ठे गृहीत्वा तत्रस्थांस्तान् पुलिन्दांस्तद्वधात् सर्वात्मना न्यवीवरत् ततश्च प्रवर्तिताभिषेकमहोत्सवा यथाविधि तमभिषिच्य विशालमटवीराज्यं यौवराज्येऽभिषिक्तं निजतनुसंभवं पुत्रं तत् करवालरत्नं च निर्भरानुरागसमानपुरस्सरं तस्मा उपाहार्षीत् । इत्थंकारमतर्कितमेव विततकान्तार-

राज्यभद्रासनेऽधिष्ठापितो राजा श्रीदत्तो मिथःसन्धिचिकीर्षयैव पितृव्योपदेशं स्वीकृत्य श्वशुराभ्यां विम्बकिशूरसेनाभ्यां दूतान् प्राहैषीत् । जामातुस्तस्य सन्धिसंबन्धविषयक सदेशमुपलभ्य निजनिजदुहितृस्नेहाच्चतुरङ्गपरिपूर्णवाहिनीकृतानुयात्रौ तौ राजानौ तदन्तिकमुपससृतु. । तदनन्तर यथावद् दृढीकृतान्योन्यसबन्धयोस्तयो श्वशुरयोर्वाहिनीभि सार्ध सज्जीकृतदण्डयात्रः श्रीदत्तोऽमर्षेण स्वपितृघातकं महापाप्मान नृपकीट विक्रमशक्तिमभिषेणयन् रणाजिरहुतभुजि त निकृष्टनरपशु दिव्यप्रभावशालिना तेन चन्द्रहासेन छित्त्वा सरोष जुहाव ततश्च राजन् सहस्रानीक सार्वभौमोऽतुलविक्रम श्रीदत्त समुद्रमेखलामेकातपत्राकिता मेदिनी प्रज्ञोपेतेन निरुपमेण भुजवीर्येणोपार्ज्य तिसृभि पतिदेवताभिर्बुद्धिमद्भिश्च पितृव्यपुरोगमै सुहृद्भिरनुत्तमसाम्राज्यसपत्सभोगसौख्यानि यथेप्सित सुचिरमनुबभूव। एवं कालज्ञा धृतिमन्तो नानाविधसकटसकुल प्रियजनविरहशोकसागरमवतीर्य स्व श्रेयसमवाप्नुवन्तीति । इत्थकार कथाविशारदेन कथकेन सगमकेन कथित विचित्राश्चर्यबहुल रोमहर्षण कथानकमाकर्ण्य ता दीर्घयामा विभावरीमतिवाह्य कियद्भिर्वासरै सुरपतिमेघवाहनाधिष्ठिना सहस्रमरीचिसुधाशूदयानुरागपावनोदयशैलपरिष्कृता ककुभमासाद्य सहस्रानीको राजपुगव परस्परविश्रम्भमुखितनिर्भयमृगविहगश्वापदकुलसकीर्ण पुष्पितसान्द्रच्छायाद्रुमराजिविराजिताजिरमुभग शश्वच्छान्तिस्वरूपमिव प्रशान्तिरमणीय

पर्यैदिवसैः प्राज्योपायनादिवैवाहिकसंभारनिर्भरेण विधिवदनुष्ठितेन महतोपयामेन तं तस्या लज्जानम्रितस्मेरवदनाया मृगाङ्कवत्याः पाणि सानन्दमजिग्रहत् । एवं परिणीय तां शश्वद्वृद्धिस्थां वल्लभां पितृव्यार्पिताक्षय्यविभूतिरसौ कालक्रमेण सौहृदयार्द्रचेतोभिर्वाहुशालिपुरोगैः सुहृद्भिरपि सङ्गतो वृहस्पतिसमबुद्धेः पितृव्यस्य प्रज्ञावैभवेन मथुराधिपस्य शूरसेनस्य पुत्रीमपि प्राप्य परमानन्दथुकोटिमधिरुरोह । ततो जातु कार्यान्तरवशाज्जनपदान्तरप्रयाणमार्गस्थ कस्याचिद् विरलजनसंचारायामटव्यां प्रचरन् तरस्वी श्रीदत्तोऽकस्मात् प्रादुर्भूतैः शस्त्रोपजीविभिर्दस्युभिर्मार्गे प्रतिरुद्धोऽपि भयविवर्जित ऊर्जस्वलपराक्रमो दस्युसेनापतिप्रमुखान् प्रभूतसंख्यकान्शत्रून् प्रतिहत्य तदनु प्रबलाभिन्नशक्तिप्रहारमूर्च्छितो भयंकराकृतिभिस्तैरवशिष्टैर्दस्युभिर्दुर्गोपहारार्थं मनुष्यरुधिरशोणितवेदिकं घण्टानादप्रतिनादितं भीषणयमसदनसंकाशं रुद्राणीमन्दिरं निन्ये तत्र पुनर्लब्धसंज्ञः संपूजितगिहवाहिनी पूर्वं गान्धर्वपरिणयविधिना स्वयं परिणीतां तामेव किरातेन्द्रगुप्तां प्रेक्षाञ्चक्रे । सापि तथाभूतं भर्तारमकाण्डे दृष्ट्वा पुनस्तत्सङ्गतिप्रमुदिता तं नयनानन्दनं सुदृढं कण्ठे गृहीत्वा तत्रस्यास्तान् पुलिन्दांस्तद्वधात् सर्वात्मना न्यवीवरत् ततश्च प्रवर्तिताभिषेकमहोत्सवा यथाविधि तमभिषिच्य विशालमटवीराज्य यौवराज्येऽभिषिक्त निजतनुसंभव पुत्रं तत् कन्यालरत्नं च निर्भरानुरागसंमानपुरस्सरं तस्मा उपाहार्षीत् । इत्थंकारमतर्कितमेव विततकान्तार-

राज्यभद्रासनेऽधिष्ठापितो राजा श्रीदत्तो मिथ सन्धिचिकीर्षयैव पितृव्योपदेश स्वीकृत्य श्वशुराभ्या बिम्बकिशूरसेनाभ्या दूतान् प्राहैषीत् । जामातुस्तस्य सन्धिसंबन्धविषयकं संदेशमुपलभ्य निजनिजदुहितृस्नेहाच्चतुरङ्गपरिपूर्णवाहिनीकृतानुयात्रौ तौ राजानौ तदन्तिकमुपसस्रतु. । तदनन्तरं यथावद् दृढीकृतान्योन्यसबन्धयोस्तयो श्वशुरयोर्वाहिनीभि सार्ध सज्जीकृतदण्डयात्र: श्रीदत्तोऽमर्षेण स्वपितृघातकं महापाप्मान नृपकीट विक्रमशक्तिमभिषेणयन् रणाजिरहुतभुजि तं निकृष्टनरपशु दिव्यप्रभावशालिना तेन चन्द्रहासेन छित्वा सरोष जुहाव ततश्च राजन् सहस्रानीक सार्वभौमोऽतुलविक्रम श्रीदत्त समुद्रमेखलामेकातपत्राङ्कितां मेदिनी प्रज्ञोपेतेन निरुपमेण भुजवीर्येणोपार्ज्य तिसृभि. पतिदेवताभिर्बुद्धिमद्भिश्च पितृव्यपुरोगमै सुहृद्भिरनुत्तमसाम्राज्यसपत्सभोगसौख्यानि यथेप्सितं सुचिरमनुबभूव । एवं कालज्ञा धृतिमन्तो नानाविधसकटसकुल प्रियजनविरहशोकसागरमवतीर्य स्व श्रेयसमवाप्नुवन्तीति । इत्थकार कथाविशारदेन कथकेन सगमकेन कथित विचित्राश्चर्यबहुल रोमहर्षण कथानकमाकर्ण्य ता दीर्घयामा विभावरीमतिवाह्य कियद्भिर्वासरै सुरपतिमेघवाहनाधिष्ठिता सहस्रमरीचिसुधाशूदयानुरागपावनोदयशैलपरिष्कृता ककुभमासाद्य सहस्रानीको राजपुगव परस्परविश्रम्भसुखितनिर्भयमृगविहंगश्वापदकुलसकीर्ण पुष्पितसान्द्रच्छायाद्रुमराजिविराजिताजिरमुभग शश्वच्छान्तिस्वरूपमिव प्रशान्तिरमणीय

परशुरामजनकस्य तपोवनाश्रमं प्रविवेश तत्र च तपसा निधिं तेजसा राशिमिवावदातालोकप्रभास्वरं निर्द्वन्द्वं निर्ममं सादरनिष्पादितातिथेयं जमदग्निं भो भगवन् शशिकुलधुरधरोऽर्जुनान्वयललामभूतशतानीकात्मजः सोऽहं सहस्रानीकोऽभिवादय इति प्रणनाम। राजन् स्वागतं ते भवद्दर्शनेनातीव प्रीतोऽस्मि हन्त यथा युष्मद्धृदयवेधिन्यश्चतुर्दशसमा अद्यैव परिसमाप्तिं गतास्तथा गृहाणेमां पतिव्रतां ते हृदयवल्लभां मृगावतीमेनं चास्यामुत्पन्नं तवौरसं महातेजसमुदयनमस्माभिः परिपोषितमित्युक्त्वा प्रीतिविकसिताननो जमदग्निः सुदीर्घकालविरहितां पुत्रोपेतां तां तस्मै विश्राणयाञ्चकार। आत्मजसहितप्रियजायापुनःसमागमपरमनिर्वृतिविनष्टवाग्व्यापारोऽजस्रनिपतद्बाष्पनिर्झरदुर्दिनायमानवदनो निभृतं गाढालिङ्गितोदश्रुपत्नीकः सहस्रानीकोऽतिशयरोमाञ्चव्यक्तीकृतपितृस्नेहोद्रेकविवशश्चिरन्तनामृतदीधितिवंशोदयशंसिनमुदयनमेकपुत्रमस्यात्मनो नन्दनं वक्षसा परिरभ्य मुहुर्मुहुर्गात्रेषु संस्पृशन् पुनः पुनः शिरसि जिघ्रन् स्निग्धपुत्रपरिष्वङ्गानन्दाकूपारे चिरं निममज्ज ततश्च तं तनयरत्नं समादाय मृगावतीमगः कुलक्रमागतैः सचिवसेनानीभिः परिवारितः प्रातपोवनपर्यन्तमनुयातः सान्तेवासिनं जमदग्निमामन्त्र्य चतुरङ्गवलमरान् सपुत्रया भार्ययोपेतात् तस्मान्निःश्रेयससमान्तिमयादाश्रमात् स्वीयां नगरीं प्रति प्रस्थानं चक्रे। अगमत्सुपातनेषु विरहसंतापदीर्घीभूतेषु वासन्तीकुसुममृदुलहृदयंतुदेषु चतुरस्तरदशसहायनेषु मनोविस्मापनक्षमबहुप्रकाराश्चर्यकौतुकास्पदीभूतानि मम मदनानीक स्मृतिपथे

प्रादुर्भूयमानानि पुरातनपश्चलक्षणपुराणेतिहासवद्विचित्ररसमयानि यानि वृत्तान्तकदम्बकानि तानि प्रयाणपथे दयितामुखात् सशृण्वस्तां सश्रावयश्च विविधवर्णसुरपतिधनुरभिरुचिरतोरणवैजयन्तीसमाकुलां महिषीयुवराजगृहागमप्रमुदितपौरजानपदसमूहसबाधा प्रारब्धसार्वजनीनमहोत्सवहृदिस्पृश राजधानी कौशाम्बी सप्राप्य युवराजानुगता राज्ञी पुरस्कृत्य कौतुकाकृष्टहृष्टमनसामनारतोच्चारितजयशब्दकोलाहलाना महोत्सवानुरूपाकल्पाभरणप्रसाधिताना पर.शतसहस्राणा प्रजानामनिमेषलोचनै सहर्ष पेपीयमानोऽनन्तवसुदया वसुधरया कलत्र्यपि मृगावत्या कलत्री सहस्रानीको राजकुलप्रत्यागमनसंप्रमुदितालोकभ्राजिष्णु राजप्रासादं प्रविवेश तदनु च नि शेषराजलक्षणसद्गुणशालिन तनयमुदयन यौराज्येऽभिषिच्य प्राज्यराज्यसपदा सह युगन्धरप्रभृतीना निजमन्त्रिणा सवयसस्तनूजान् राजनैतिकमन्त्रार्थ तस्मै प्रीतिपूर्णं विश्राणयाबभूव। ततस्तस्य युवराजस्य मन्त्रिमुख्यो यौगन्धरायणोऽक्षौहिणीनायको रुमण्वान् नर्मसचिवो वसन्तकश्च स्वस्वकार्यचिन्तनप्रवीणा अवश्यभाविन सहाया बभूवु । इत्थ पुत्रासमारोपितराष्ट्रभारो निश्चिन्त सहस्रानीकभूभृदीश्वरश्चतुर्दशवर्षावधिकदुस्सहकान्तावियोगसमयराशीभूतानि जीवलोकसभोगसुखानि तया सह यथातृप्ति भुक्त्वा कालक्रमेण पलितधवलेन यशसा यशोधवलेन पलितेन च सप्राप्तयशोवार्द्धक्य सभार्योऽमात्यत्रयकृतानुगमो महाप्रस्थानायैव तुषाराद्रिं प्रति पद चक्रे ।

—.०.—

# (८) उदयनवासवदत्तापरिणयकथा

शुभ्रशशधरकिरणावदाततुषारनिवहकृतोष्णीषं महीभृदधिराजं तुहिनशैलमुपयाते तुषारगौरयशस्काये वत्सकुलवंशप्रतिष्ठामूलभूते पितरि सहस्रानीके महीभृति कौशाम्बीनगराधिष्ठित उदयनः शिलोच्चयवच्छ्वत्स्याणुसप्तप्रकृतिपरिपूर्णमविषमागमविनश्वरविभूतिसंपत्समृद्धं पितृपैतामहं वत्सराज्यं संप्राप्य दूरीकृतारम्भरित्तया निःशेषप्रजासमवायहितकाम्यया विपुलां पृथ्वीं यथाबलं यथान्यायं च जुगोप ततश्च कालेनादभ्रधनधान्यस्फीतविभवसंपन्नस्य परस्परानुरक्तगुप्तिपौरजानपदस्य राष्ट्रस्यातिदृढबद्धमूलत्वान्निश्चिन्तोऽमित्रपृतनास्कन्दनभयस्य कर्हिचिदविद्यमानत्वाच्च वीतज्वरो यौगन्धरायणपुरोगमेषु धुर्येषु प्रजाप्रशासनजनपदपरिपालनविचक्षणेष्वक्लिष्टकर्मसु राज्यधुरं दुरुद्वहां सम्यग्विनिक्षिप्य शनैः शनैरनन्ततृष्णामूलभूतमृगयाव्यसनासक्तमना अहर्निशं पातालतलोकाधिपोपहृतघोषवतीवीणावादनेन चित्तापहारितन्त्रीनिस्वनमाधुर्यमुषितचेतोवृत्तीन् मदमत्तान् वन्यद्विरदान् ग्राहं ग्राहं सततोद्भिन्ननिदाघरागोद्वेगेण च सभागतोऽनुपमा वामलोचना नितम्बिनी क्रोडीकृत पेशलागर्भीक्षणाभिरामाणां नानां वदनेन्दुबिम्बे प्रतिबिम्बिता मदिरा कादम्बरी चषकेण पायं पायं कालमनिशं यापयाम्बभूवेत्याकार च दुर्निग्रहमोगाभ्यासाद्दस्यापि

तस्य व्यसनिनो मनसि कृत्स्ने जगतीह मदीयपाणिग्रहणयोग्या सर्वलोकसमतास्मद्वंशसदृशप्रकृष्टकुलाभिजाता श्लाघ्याभिजनरूपशीलशालिनी मदनुरूपा प्रमदा कुत्रापि न वर्तते परन्तूज्जयिनीनाथस्य कन्यारत्न सकलललनाललामभूता वासवदत्ता नाम केवला वरवर्णिनो कर्णाकर्णि नन्वनुश्रूयते तथापि समुन्नतशिरस्कोऽहमुत्तमाग प्रह्वीकृत्य परिपन्थिन त तामभियाचितु नोत्सहे तर्हि तां कथकार हस्ते कुर्यामित्यात्मानुरूपदारपरिग्रहचिन्तन समुत्पेदे। तत्काल लोकोत्तरदिव्योत्साहविस्मापितसुरासुरसमुदायाभिष्टुतदिविषद्वरूथिनीनायकप्रतिकेप्रतुल्यपराक्रम सद्धर्मन्यायमार्गानुसारिसुनीतिरञ्जितजनपदमपूजिताविकलमहिमा यथायोग्यसन्धिविग्रहप्रजानुग्रहनिग्रहाद्युपायप्रयोगातिनिष्णातः समस्तपार्थिवाग्रणीर्मालवेश्वरश्चण्डमहासेनोऽपि विचारयामास यद्यपि मामकीनतनूद्भवा वासवदत्ता समधिगतानवद्यविद्याकलाकलापप्रवीणा निष्कल्मषलावण्यसौजन्यसौशील्यप्रमुखाशेषस्त्रैणगुणसमुपेता सप्रति विवाहयोग्यवयःस्था तथापि लोकेऽस्मिन् समग्रगुणसपन्नायास्तस्या. सदृश करपीडनममुनितो वरो वत्सेशोदयनवर्जं न क्वाप्युपलभ्यते सोऽपि वत्सराजो मम शाश्वतिको विरोधी दुराराध्यो दुरासददुर्गनालासुरक्षितराष्ट्र प्रीणितप्रकृतिः परमभक्तिमदमात्यगणोऽप्रतिमवैभवनिर्भरकोशागारो मतिमतां वर उपायशतैरपि प्रवणीकर्तुं न शक्यस्तत्कथ नाम त वशीकर्तुं शक्नुयामभिमानोत्सिक्तोऽसौ वैवाहिकसम्बन्धमुद्दिश्य मा न याचतेऽहमपि त न याचे तद्व-

शोकरणोपायस्तु केवलमेक एव भवति यतो हि स महीक्षिन्मृगया-
व्यसनाविष्टमना. कान्तारेषु गहनेषु परिबंभ्रम्यमाण. श्रुतिसुभग-
घोषवतीवीणाकलक्वणितविमोहितान् वनदन्तावलान् वन्धं बन्धं
रंरम्यते ततोऽनेनैव रन्ध्रेण युक्तित. सैन्यैर्बन्दिग्राहं गृहीतं तमि-
हानीय तनयां गन्धर्वविद्या शासयिष्यामि तदनु सोऽपि परिपूर्ण-
कान्तिमत्तस्या वपुर्दृष्ट्वा स्वयमनुराग नूनमनुभविष्यतीति तदनन्तरं
च देव वत्सराज उदयनो महौजा मानधनो मनस्वी सामादिभि-
रुपायैरवश्योऽपि तावदादौ समुचितसामप्रयोगेण निपुण परीक्ष्य-
तामिति कुशाग्रबुद्धेर्बुधदेवाभिधस्य मन्त्रिमुख्यस्य समजस मन्त्रमपि
समयोचितमुपलभ्य सदेशहर कौशाम्बी यथाशीघ्रं गत्वा वत्स-
भूमण्डलेश्वरमुदयनं मद्वाचिकमभिभाषस्व यद्वत्सराज मदीया
नन्दिनी वासवदत्ता संगीतशास्त्रपरिशीलनतत्परा गान्धर्वकलापा-
रगताद्विशेषतो वीणावादनमर्मविदस्त्वत्तो वीणावादनं शिक्षितु-
मनुवेलं समीहतेतरा तत्तदीयसमीहानुरोधादुज्जयिनीमभ्युपेत्य
कञ्चित् काल तामनुशाधीति सदिश्य कृत्रिमसौहार्दशसिभिः प्राभृतैः
सह दूत तस्मै विससर्ज । अथ सत्वरं कौशाम्बीमाजग्मुषो माल-
वराजदूताद् यथादिष्ट सदेशार्थ शुश्रुवानन्तर्ज्वलितकोपानलो वत्स-
राज. सविधवर्तिन सुधियं मन्त्रिवरेण्य यौगन्धरायणमुपांशु पप्रच्छ
कमर्थमपेक्ष्य दुर्मतिना चण्डमहासेनेन सगर्वमेव मे सदिष्टमिति
पृष्टेन च तेन राजन् मृगव्यग्रस्तचेतसं व्यसनिनं परित्यक्तराज्य-
चिन्तन स्वैरवृत्ति त्वा विदित्वा सुरूपया निजदुहित्रा त्वां वशं

नेतुं कामयते भूभृच्चण्डमहासेनस्तस्मादात्महिताय पौरजानपदयो-गक्षेमाय च सर्वलोकगर्हितं व्यसननिषेवनं जीर्णपटच्चरमिवापहाय यथापूर्वं राज्यधुरामुद्वहेति प्रत्युक्ते भो मालवराजसंदेशहर राज-पुत्री वासवदत्ता वीणां यथारुचि मत्सकाशादध्येष्यते तदर्थं सेहा-गच्छतु यथा हि विद्यार्थी गुरुगृहमुपैति न तु गुरुर्विद्यार्थिगृहमिति सुविस्पष्टं तं दूतमुक्त्वा व्यसृाक्षीत् तत्समनन्तरं च संदेशहरमुखो-दीरितानुचितमालवेन्द्रवाचिकश्रवणोत्थितक्रोधाग्निप्रजाज्वल्यमान-सर्वाङ्गो धूमलभ्रू कुटीबन्धधूमोद्गारानुमेमीयमानोल्बणान्तर्मन्युधूम-केतुः पार्श्ववर्तिनः सचिवसेनापतिप्रमुखान् महामात्रान् सरोषमि-त्याजिज्ञपदतिदर्पदर्पितोऽवन्तिनृपतिर्मत्सकाशाद्वीणां शिशिक्षिषु-मात्मनो दुहितरमत्राप्रेष्यैव भृत्यमिव मां सावज्ञमाकारयति तत् कथं नाम निर्मर्यादमानोद्धतस्य दुर्विनीतस्य तस्यावधीरणां तिति-क्षुरपि तितिक्षे सपदि समीरणवेगेन वेतसमिव तीक्ष्णदण्डनिपात-नेन तं दुरात्मानं विनयविनम्रतां निनीषामि भो सेनानीः सान्धि-विग्रहिक सज्जीक्रियतां तूर्णं दण्डयात्रार्थमरिंदमचतुरङ्गकृतव्यूहा चमूः । इत्याकर्ण्य मालवराजापमानविनष्टधियोऽविमर्शकारिणस्त-स्यासमञ्जसं वचः सुधियामग्रेसरो दूरदर्शी मन्त्रकुशलो मन्त्रि-णामग्रणीर्यौगन्धरायणो व्याहार्षीद् राजन् युक्तरूपमिदं ते वाक्यं न खलु मनस्विनः परेषामवहेलां क्षमन्ते तथाप्युपसह्रियतां वरू-थिनीसंनाहसमादेशो यथा हि दिव्यानुभावप्रसादित्तोऽतिमानुष-शक्तिमानप्रतिभटश्चण्डमहासेनो न केनाऽपि पराभवितुं शक्यते

लब्धरवच्छेद सन् कठोरदंष्ट्राभ्या तस्य शताङ्गं शतधा जर्जरीकृत्य निजश्वभ्रमाशु प्रविवेशैव च सहसा विवरान्तरेऽन्तर्हितं तं पोत्रिणमनुधावन् सोऽपि नरपतिः पाताले कृतानुप्रवेशस्तत्र नयनोत्सवमनन्तविभूतिसंपन्न चामीकरमणिशिलानिर्मितोज्ज्वलानेकभूमिकहर्म्यपङ्क्तिसमाकुलमतिमान नगर दृष्ट्वातिविस्मितमानसोऽसकृदक्षिणी विस्मयहर्षजडेन करतलेन परामर्श परामर्श तदन्तर्गतसरोवररोधसि निषसाद मुहूर्तान्तिरे च पर शतयोषित्परिवारितामतिमानुषाकृतिशोभिता हृदयधृतिमुप द्वितीया रतिमिव शनैः शनैर्भ्रमन्तीमेका सुतनू ददर्श । सापि तेजस्विन वपुष्मन्तमनङ्गमिव चक्षुष्य तं दर्श दर्श सहसोत्थितमनसिशयावेगतरलितहृदयतरगा सती ससाध्वसमयि सौम्य किंनामा किंव्यापारस्त्वं किं प्रयोजन लक्ष्यीकृत्य रसातलेऽत्रोपस्थितोऽसीति तमप्राक्षीत् पृष्टेन च तेन याथातथ्येनात्मनो मृगयावृत्तान्ते कथिते दुर्निवारानुरागशालिभ्यां लोचनाभ्या निरन्तरबाष्पबिन्दुधारां प्रथमस्नेहावेशविवशाच्छिरीषकुसुमाधिककोमलाद्धृदयाद् धृति न युगपदजीगलत् । हे सुभ्रू का त्वमसि किमर्थं शोकसागरनिमग्नेव दुर्मनायम इति चण्डमहासेनेन सकौतुकमनुयुक्ता सा वरारोहा पुनरवादीद् राजन् यस्त्वत्पूर्वपराक्रमपातैरप्यव्रणितवपु पोत्रायुध सोऽङ्गारको नाम सुरवैरी तस्य चाहमगारवती नाम तनूजास्मि स मे जनको महाकोलरूपधारी वज्रसारमयत्वान्न केनापि हन्यते हन्यमानोऽपि किन्त्वद्यासौ मृत्युंजयो मम पिता पिपासापरिश्रमदरकदर्थितत्वाद्

दिष्ट्या त्वामपहाय किंचिद्विश्रामहेतो परित्यक्तवराहवेषः सांप्रतं स्वपिति यदि सुप्तप्रबुद्धोऽसौ त्वामत्रागत जानीयान्नि सदेह् त्वा यमसदन प्रापयेदिति तव हितैषिणी त्वदर्थे रोदिमीति। आकर्ण्य तस्या दयालु वचन स महीनाथ· किमपि ध्यात्वेत्थं तामसुरकन्या सस्नेहमभ्यर्थयाञ्चक्रेऽयि सुदति मयि तावकीन मनोऽनुरज्यति चेत् तर्हि मद्वचनादिदानी पितु समक्ष प्रमुक्तकण्ठ सविषादमिवोदश्रुनेत्रा विलप ततोऽत्यन्तरुदितेन तवोद्विग्नचेता स शोकहेतु त्वा नून प्रश्नयेत् तदा त्व तमभिधेहि हे पित कठिनतमवज्रसारमयवर्म्माणमपि त्वा बलीयान् कोऽपि मारयेच्चेत् कीदृशी मे मन्दभागिन्या अवस्था भवेदिति चिन्तयन्ती रोदिमीति तत्समनन्तरमेव परस्परगाढानुरक्तयोरावयोर्योगक्षेमपुरस्पर श्व श्रेयस समुत्पत्स्यते। तदनु तिरस्करिणीपृष्ठनिगूढवपुषि राज्ञि शृण्वति तद्वचन सहर्षमूरीकृत्य सा वामलोचना प्रसुप्तस्य पितु पुरत उच्चैस्तमा रोदितुमचेष्टिष्ट ततश्च तस्या क्रन्दनेन प्रबोधित स वराहासुर ईषद्विषण्णमना वत्से कस्मात् कारणादेवकार क्रन्दसीत्यनुयुयुजे। तात यदि बलाधिकेन केनापि मदेकाश्रयस्त्व पञ्चता नीयेथास्तत का मे शोच्यावस्था भवेदित्यसभाव्यमपि भावि दौर्भाग्य तर्कयन्तीत्यमभिशोचामीति मुग्धाया दुहितुर्वाक्य निशम्य स दैत्येन्द्रोऽङ्गारक सोपहास व्याजहार हे पुत्रि मौग्ध्यभूपणासि मा स्म भैर्दीर्घैथा निसर्गजवज्रसनद्धाच्छेद्यशरीरोऽतिमृत्यु शश्वदनश्वरोऽह ननु सर्वकपमपि यमुनाभ्रातर साटोपमावहेले तथाभूत-

मतिदृढवज्रमय मां व्यापादयितु प्रभूष्णुस्त्रैलोक्ये न कश्चिदपि विद्यत अत एव मा शोचीः केवलं दक्षिणेतरकरतले यन्मर्मच्छिद्रं वर्तते तदपि कार्मुकधारणेन सतत परिरक्ष्यतेतमामिति । उपाशु श्रुत्वैतत् सर्व चण्डकर्मा चण्डमहासेनो धृताधिज्यकोदण्ड सहसाभिद्रुत्य मार्गणेनामोघेन तस्मिन्नेव वामहस्तमर्मणि प्रहृत्य तमेकपदेऽमीमरत् तदनन्तर च नेत्रक्षणदा हृदिस्पृश स्मरमञ्जरी तामङ्कारवती समादाय स्वपुरमुज्जयिनी प्रत्यागतो विवाहमहामहपूर्वक विधिवदनुष्ठितसप्तपदीप्रक्रमेण हृदयवल्लभा तामुपयेमे । तत. कालक्रमेण तस्या महिष्या गोपालकपालकाभिधयोर्महातेजसोस्तनययो. समुत्पन्नयो. प्रमोदातिरेकविकसितस्मेराननो महीभर्ता भूरिदक्षिणापूजासंभारभरित हृदयगममिन्द्रमहोत्सवमकार्षीद् येन प्रीतो दिवस्पतिर्वासव. स्वप्ने साक्षात् प्रादुर्भूय प्रीतिपूर्व तं राजानमुवाच भूमीन्द्र प्रसन्नोऽस्मि मम वरादचिरेण त्व लप्स्यसे वीरप्रसू निष्कलङ्कपौर्णमाससुधांशुकलेवाक्लिष्टकान्तिमशेषयोषित्क्रिया पुत्री यस्या. पुत्रस्ते दौहित्रो मन्मथावतारो विद्याधरचक्रवर्ती भवितेति । अदीर्घे काले ततोऽतिक्रान्ते क्षीराकूपारसमुद्भवा लक्ष्मीरिव नवाङ्गशोभिनी परिपूर्णरूपलावण्यकौमुदी मातापित्रोर्नयनानन्दयित्री पुत्री समजनिष्ट या दृष्ट्वा प्रीतिप्रफुल्ललोचनश्चण्डमहासेन मतुष्टेन वासवेन दत्तेय मे तनूद्भवेति नामतो वासवदत्ता ता चकार । इत्थमिमहामहिमोपेतो राजतल्लजश्चण्डमहासेन कर्हिचिदपि पराजेतु न शक्यते तथा

राजन् सेनासंनाहाज्ञा झटित्युपसहर किञ्चासौ मालवेन्द्रो विपक्षस्यापि तव वासवदत्ताकरपीडनमनिश हृद्यभिलपतीत्येवं दीर्घदृष्टिना यौगन्धरायणेन विस्तरेणोपवर्णित चण्डमहासेनोदन्त साकल्येनाकार्ण्य प्रीतमना वत्सराज उदयनो मनसिजवशंवदो वासवदत्तामुपितहृदय सबभूव । अस्मिन्नेवान्तरेऽचरितार्थस्त्रपाविनम्रवदनः सदेशहरो राजधानी प्रत्यागत्य वत्सेश्वरस्य प्रतिकूलं प्रतिवाद चण्डमहासेनाय न्यवीविदत् तच्छ्रवणसमनन्तरं च सोऽप्यलंकर्मीण प्रभविष्णुर्व्यचीचरदसौ मनस्विपुरोगो वत्सजनपदप्रभुरत्रागन्तु न वाञ्छति यदि वासवदत्ता तत्र तदन्तिके प्राहेष्यं तर्हि मे लाघवमभविष्यत् तस्माद् युक्तितो बन्दिग्राह त गृहीत्वेहानयामीत्येव च विचारं विचार स्वगजेन्द्रनडागिरिसन्निभं जङ्गम महीध्रमिव महाकायं यन्त्रकुञ्जरं निर्माप्यान्तर्निहितसायुधीनगुल्म सत्यगजेन्द्रप्रतीकाश न विन्ध्यकान्तारे मक्ष्वतिष्ठिपत् । अथ नडागिरिसमानमतगजेन्द्रपरिमार्गणार्थं विश्वत प्रेपिता दुर्निग्रहमृगयाव्यसनप्रसक्तभर्तृपिण्डानुजीविन प्रणिधयो विन्ध्याटव्यामितस्ततो मन्दमन्दं सचरन्तमदृष्टपूर्वं विशङ्कटभूधरप्रमाणं तं कृत्रिमस्तम्बेरममाराद् दृष्ट्वा सत्वरमागत्य भो राजन् सुमहदाश्चर्यं निखिललोकदुर्लभ सर्वजनचेतोविस्मापनमस्माभि सद्य साक्षात्कृत हन्त परमार्थतोऽभ्र कषोच्छ्रायोपेतो विन्ध्याद्रिशिखरसमानपरिमाणो मेघनादमिव शोश्रूयमाण गर्जितमभीक्ष्ण कुर्वाणोऽतिप्राज्यै करशीकरैरकालवर्षागमभ्रान्ति जनयन् महिष्ठो दन्तावलो विन्ध्याचल-

कान्तारेऽस्माभिरदर्शि तादृक्परिमाणोऽपरो द्विरदस्त्रिषु लोकेष्वपि भवितुं नार्हतीति ससम्भ्रमं भर्त्रे विज्ञापयामासु.। आकर्ण्य रोमहर्षण तद्वच सहस्रचारचक्षुर्वत्सेन्द्र समोदकोटिमधिरुह्य ति दध्यौ यदा नडागिरिगजेन्द्रस्य प्रत्यर्थी स गजयूथपो मया ग्रहीष्यते तदा निजकुञ्जरप्रभावदर्पितश्चण्डमहासेनो मद्वशवदो भूत्वा स्वहस्तेन वासवदत्ता मे सादरं समर्पयिष्यत्येवं ध्यात्वा च शिखरिनिभयूथपजिघृक्षाप्रेरितचित्तवृत्तिरप्रत्ययिततादृग्दन्ति सद्भावानां मन्त्रिणा निषेधवचनमपि प्रत्याख्याय तैर्यथार्हवर्णैर्दर्शितमार्गो विन्ध्यशैलं प्रतस्थे ततश्च कतिपयैर्वासरैस्तत्र सायमासाद्य तद्द्विरदसंक्षोभभयाद् विप्रकृष्टे प्रदेशे स्थापितराजयुग्वगणः कतिचिदपसर्पसहितो धृतवारणमोहनघोषवतीवीणो प्रायशो गगनपरिचुम्बिप्रांशुकायं सत्यकरियूथाधिपाभ तमेव कपटानेकप प्रहर्षविस्फारिताक्ष ददर्श दृष्ट्वा च त विलोभयितु मधुरस्वरेण गीतेन सममुपवीणयन् शनकै शनकैरुपससार। मधुरिमातिशयश्रवणसुभगगान्धर्वरसावर्जित इव सोऽपि महाद्विप सामिनिमीलितलोचनः कर्णतालमास्फालयन् मन्दगनिर्व्याज व्राज तं राजान सुदूरमाचकर्ष तत्रान्तरे चाकाण्डेऽर्जावितमेव तस्य यन्त्रदन्तिन. कुक्षितो निर्गता. कवचदशिता आयुधीया सरभसमभिपत्य वीणावादनैकाग्रमानसमुदयन जीवग्राहं बद्ध्वा चण्डमहासेनम काशं तूर्णं समानिन्यु। तत्क्षणाद् विन्ध्याटवीतस्तै सायुगीनैरग्रे प्रहितस्य संदेशहरस्य मुखाच्चिराभिलषितमुदयनग्रहणवाचिक

समुपजोषं निशम्य साधुवादपुरस्सरमुत्थाय सुनीतिज्ञोऽवन्तीश्वरश्चण्डमहासेन. प्राकारगोपुराद्वहि स्वय गत्वा तं सुभटैर्जीवग्राहं गृहीत्वानीयमानं वत्सेन्द्र राजोचितसत्क्रियाविशेषेणादृत्य तेन साकं राजभवनं प्राविक्षत् तदनु च भो वत्सभूमण्डलाधिराज शृणु यथेय मे कन्यका वासवदत्ता वीणावादनादिगन्धर्वविद्यामभ्यसितु नितरा समीहते तथैना त्वदीया शिष्या गान्धर्वं शाधि विदाकुरु केवल तदर्थमिह बद्ध्वानीतोऽसि तदत्रास्मद्वेश्मनि कञ्चित् कालं वीतज्वरेण त्वया यथासुखमुष्यता कदाचिदपि मा स्म विषद इति प्रीतिपूर्वं निगद्य तस्मै स्वीय कन्यारत्न सानन्दमदीदृशत् । सोऽपि वत्सराजश्चिरकालहृदिस्था नयनकौमुदी कृष्णकौशेयसुकुमारचिकुरहस्ताभिरुचिरा मनोज्ञनीललोचनच्छवितिरस्कृतेन्दीवरा पेशलभ्रूचापरचनोपहसितकुसुमायुधधनुषं नेत्रोत्सवदायिवदनेन्दुसुषमामनोहरी जिष्णुमनोभूराजाभिषेकसौवर्णकलशायमानपीनस्तनयुगलाचारीकृष्यमाणयुवजनलोचनभ्रमरनिकुरुम्बा मजुलभुजलताभ्यां प्रथमप्रणयिन सानुरागमाशिश्लिक्षुमिव पुनस्तनुनावलग्नेन कान्तिमद्वलित्रय बिभ्रती मदनलीलारोहणार्थं विश्वसृजा निर्मितस्येवातिपृथुलस्य नितम्बबिम्बस्य भाराद् गजगामिनी मनोरमरम्भोरू किं बहुना परिमितकथा सौजन्यसौशील्यसुगुणशालिनी समस्तललनाललामभूता ता वासदत्ता निर्वर्ण्य कल्लोलमालाव्याकुले पारावारतले प्रतिबिम्बितोऽमृतदीधितिरिवातिवेलमन्मथागेवसक्षोभिते हृदये तरलायमानो दुर्गाढशृङ्गारसागरे न्यमाङ्क्षीत् । सापि राज-

दारिका दुहितृवत्सलेन सततलघूत्थानशीलेनालंभूष्णुना प्रज्ञाप्रभावात् प्रसह्यानीतमतनुद्युतिविराजितं निसर्गसुभगं सहजराजलक्षणसमुपेतदर्शनीयवपुषं मूर्तिमन्तमनङ्गमिवानवद्यसौन्दर्यविलसितं तं वत्सराजं दृष्ट्वैव निष्करुणमकरध्वजसायकाभिहतेवाधोमुखी भूत्वा दुर्भरकुचस्थलवेपथुदुर्बला समजनि। तस्मिन्नेव क्षणे स्मरवागुरायां पतयालु संजायमानान्योन्यानुराग तादृग्भूतं युवयुग्ममालक्ष्य सद्यःसफलीभूतमनोरथ इव क्ष्माभृत्पुंगवश्चण्डमहासेनः स्मितिविकस्वरदृष्टिर्भूत्वा संतुष्टिप्रकर्षमयासीत्। ततः प्रभृति प्रत्यग्रविकसिताम्लानप्रेमपुष्पसाराधिकमधुरया प्रवाससंतापपरितप्तहृदयविनोदिन्या सुचरितपरिचर्याविरिवस्यातत्परया तया वासवदत्तया स्मितिपूर्वमजस्रमुपसेव्यमान पुष्पंधय इव तदीयसान्द्रप्रणयामृतरसं यथातृप्ति पायं पायमानन्दोद्रेकविस्मृतनिजराज्यावस्थाचिन्तनो वत्सदेशाधिप उदयनः स्निग्धां घोषवतीमङ्के कृत्वा मधुरमधुरैः स्वरैर्गान्धर्वमर्मज्ञस्तां वीणामशिशिक्षदेवंकार चाहर्दिवं तेनाञ्जसानुशिष्यमाणा साप्यतनुशेमुषी सूक्ष्मवीणावादनकौशलमध्यगमत्। अत्रान्तरे सरीसृपकुटिलेन कूटोपायेन चण्डमहासेनेन जीवग्राहमार्यहलं गृहीतमुदयनं विदित्वा सकलमतिविस्मयप्रकोपविक्लवं वत्सराज्यमकाण्डझंझावातप्रहतसमुद्रवदतिवेलं संचुक्षुभे वत्सराजभक्ताश्च सर्वे पौरजानपदा उद्दामक्रोधवह्निप्रज्वलितमानसा ऐकमत्येनैकीभूय बद्धमुष्टय उच्चैर्न्नरामाचुक्रुशुर्वयं सर्वे प्रभुसमुद्धरणाय दुराचार दुरात्मानं नृपकीट चण्डमहासेनमभिषेण-

यामेति । भो भोः प्रजाः शृणुत यूयं सर्वाः प्रजा यावत्या राष्ट्रभक्त्या निकृष्टापमार्गानुगामिनमवन्तिनरपतिमवस्कन्दितुमुत्सहध्वे तावती पुनरवलम्ब्य जनपदहिताय प्रभुकल्याणाय च सापरायिकोत्साहमपाकुरुध्व यथा न केवलं दुराधर्षबहुदुर्गपरिपालितोऽपि दिव्यमहानुभावपरिरक्षितोऽसौ बलाधिकश्चाण्डमहासेनो न जातु पराजीयते किंत्वास्कन्दनेऽसमञ्जसं विधीयमानेऽस्मद्विभुशारीरकक्षेममपि विनश्येत् तस्मात् प्रज्ञाप्रभावेनैवाक्षतशरीरं प्रभुं समुद्धर्तुं यतामहे इत्यमित्रबलमापनप्रवीणोऽप्रतिरथो वाहिनीपती रुमण्वान् कथञ्चित् ताः प्रकृतीः प्रशान्तसंक्षोभा विदधौ । एवं वत्सराजैकतानभक्तिदृढीकृतसंकल्पमनुरक्तप्रजं देशं विज्ञाय प्रसन्नवदनो बुद्धिमतामग्रगामी निरुपमप्रतिभानयोगप्रभावसंपन्नोऽमात्यमुख्यः स यौगन्धरायणो भोः सुहृद एवंविधे व्यतिकरेऽहं वसन्तककृतानुयात्रः क्षिप्रमुज्जयिनीं गत्वा निजमनोपानुभावयोगतो निश्चितमेवास्मदीयं स्वामिनं बन्धनाद्विमोच्य पुरेहानयामि तत् सततोत्थानशीलैरतन्द्रितैरत्रस्थैर्भवद्भीः राज्यं यथावज्ज रक्षितव्यमिति सेनानीरुमण्वत्प्रभृतीन् महामात्रानभिभाष्य प्रस्थितो वसन्तकसहायोऽतिमानुपविद्यावैभवेनाचिरेणाभ्रंलिहाग्रप्रांशुभूरुहराजि-नीरन्ध्रां बहुविधविहगश्वापदसमवायसमाकुलां दुःसंचारां विन्ध्यशैलाटवीं प्राप्य वत्सराजसखस्य पुलिन्दकाह्वस्य सकलाटवीकाधिराजस्य दुर्गप्रासादं प्रविश्य च स्वमित्रोपजीविप्रज्ञानामात्यागमनप्रहृष्टमनसा तेन प्राज्यातिथेयेन सत्कृतस्तं विदितोदयनबन्धन-

प्रवृत्ति विधाय तच्छरीररक्षार्थं प्रत्यागमनमार्गे सज्जीकृतसमग्र-वनेचरसेनासन्नाहमचीकरत् ततश्च वसन्तकद्वितीयोऽल्पीयसा कालेनोज्जयिनी समासाद्येतस्तत संकीर्णकर्परकीकसखण्डकङ्काल-भयानकालोकं सर्वतोव्याप्तपललरुधिरमेद:पिण्डदौर्गन्ध्यातिव्य-थितघ्राणेन्द्रियं दुर्गन्धवाहिसान्द्रधूमावलिपरिच्छन्न शवमासाहार-तृप्तिनरीनृत्यमानवेतालराक्षसादिकुणपाशननिवहं सततबुभुक्षित-सारमेयतरक्षुवृककोलाहलबधिरीकृत महाघोरपितृवन निशि प्रविश्य तत्रस्थेन योगेश्वराभिधेन ब्रह्मराक्षसेन सख्य बद्ध्वा कामरूपता-सिद्धि तस्मात् प्रापत् । तत उत्तरेद्यु: प्रातस्तरा कामरूप: सुधीर्यौ-गन्धरायणो युगपद्विकृतरूपोऽपोगण्डो वामनः खुरणस पचशिखा-जटिल· पिचण्डिलो गड्डुल काणो विततास्य. पगुरुन्मदिष्णु: स्वच्छंदं भूत्वा तेनैव रूपपरिवर्तनयोगेन वसन्तकमपि वैरूप्यं नीत्वा विकटमहाकायमूर्ध्वकेश विस्फारितगोलकसंकाशबृहल्लोचनमुच्चा-वचदष्ट्रादतुर गृध्रचञ्चूवत्खरणस विशालहनुमुष्ट्रग्रीवाभागदीर्घ-ग्रीव सर्वजनहास्यभाजनं त चकार तदनु च तादृग्रूपेण वसन्तकेन सह घटापथे प्रस्खलितगतिश्चासज्ज्यमानो गायन् नृत्यन्नट्टहासं कुर्वाणो किमपि वाचयन् महाजन सहस्ततालमुच्चै. परिहासयश्च कौतुकाकृष्टे. कृतकलकलैर्वटुगणैरनुसेव्यमानो राजकुलकन्य-कान्त.पुरसमीप गत्वा नितान्तोन्मत्तनर्मपरिहासानृत्यप्रयोगमतिभृशं चकार । तत शुद्धान्तगवाक्षेभ्य उद्ग्रीवा विरूपयोस्तयोरति-विचित्रचेष्टा निरूप्य विस्मयातिभूमि गता वासवदत्ताया. पारि-

पार्श्विका महदद्भुतं तत् तस्यै निवेदयाञ्चकुस्तत्क्षणं च सापि कौतूहलाविष्टमना सपदि ताभि समस्तमर्त्यलोकदुष्प्रापमतिशय-दुर्दर्शनं विकृतरूप हास्यपात्र तन्नरयुगल संगीतशालामनाययत् । अथ तत्रानीतौ कुब्जविकटकायौ यौगन्धरायणवसन्तकौ चिर-विरहित वीणाचार्य वत्सेशमुदयन पुरतश्चिराद् दृष्ट्वोदश्रू नि शब्दं रुरुदतुस्ततश्च तस्मै प्रत्यभिज्ञानसज्ञा तूष्णीं ददतु । सोऽपि वत्सराजस्तौ विकृतरूपौ प्रत्यभिज्ञाय गूढसमन्त्रणार्थं परिजन-सहिता राजसुता सरस्वतीपूजा व्यपदिश्य विससर्ज ततश्च निर्गता-या तस्या दूरप्रसारिताभ्या भुजाभ्या वयस्यौ सस्नेहं परिरम्य बाष्पोद्गारदुर्दिनायमानवदनः स्वराज्यस्थितिप्रवृत्तिपूर्वकमशेष-वृत्तान्त विस्तरश पप्रच्छ । दीर्घनि श्वासपुरस्सर निरवशेपेण तस्मै निवेद्य समग्रवृत्तान्तजाल सुकृती राज्यधुरधराग्रणीर्वत्सराज-परायणो यौगन्धरायण पलायनोपायमुपाशु तेन सम्मन्त्र्य लब्धत-दीयानुमतिरेकाकी यथागतं निर्जगाम । ततो वत्सेन्द्रस्य सविधे कृतस्थिर्ति सहजनर्मपरिहासप्रावीण्योपेत परमनोरञ्जनविचक्षण-मुद्दामहास्यजनक तादृग्रूप क्रीडनकमिव दरीदृश्यमान नर्मसचिव वसन्तकमवलोक्य पेशलस्मितव्याकोशनयनोत्पला कण्ठनिरुद्ध-स्वच्छन्दजिहसिपा राजतनया हे सुदर्शन भूदेव किं विशिष्ट वेत्सि किव्यापारोऽस्युच्यतामिति सकौतूहल्यमन्वयुक्त श्रुत्वा च तद्वच ईष-द्विमनीकृतेनेव तेन नर्मपात्रेण महादेवि प्रकृतिदुर्दर्शनमपि सुदर्शनमिव मा मन्वाणाया अत्रभवत्या वचनामृतेन सुतरामनुगृहीनोऽस्मीदृग्वै-

रूप्यविभूषितोऽप्यद्भुतकथावैचित्र्यरसपरिपूर्णसर्वाङ्गशोभी कथा-पण्डितंमन्यानामपि मनांसि विचित्राख्यायिकाकथनेन लोहकान्त इव लोहशकलानि ध्रुवमावर्जयितुं प्रभवामि किं पुन. कथाविद्या-विहीनाना भवादृशीनामविदग्धानि मनांसीति सदर्पं गर्जितेऽधिक-प्रफुल्लनेत्रसरोजा हसन्ती सा त नर्मावतारनौकाशमम्यभाषिष्ट तर्हि महाब्राह्मण त्वया कथ्यता कापि चेतोविनोदिनी कथेति । श्रूयता यदि कौतुक महामहिषि ते कथयामि कथामिति प्रस्तुत्य कथाविशारदो वसन्तक उपाख्यान कथयितु प्रचक्रमे । अस्ति मथुरा नाम महापुरी कसमूदनदामोदरजन्मपवित्रिता पुष्कलरतिरसविल-सितगोपाङ्गनासहस्रपरिवृतराधाकृष्णसभोगशृगारविहारभूमिस्तत्र च पुरा बभूव कापि स्वाधीना रूपाजीवा नूनं कृत्स्नपुरुषजाति-वशीकरणाय सकलवारवनितासारेणादभ्रकेलिरसाकृष्टमनसा मीनकेतनेन विशेषत. सृष्टेव प्रकृष्टाकृतिलावण्यहृ पिता निरुद्धप्रगू रूपिणीत्यन्वर्थसज्ञा । अथ कदाचित् सास्वादितानेकपुरुषरसा गणिकापि भूत्वानुरागवती सहृदया देवायतन गत्वा सौन्दर्याति-शयितप्रद्युम्न मूर्तं तारुण्यसारमिवाभिरुचिराकृतिं कंचित् पुमांसं यदृच्छया दृष्टिगोचरे प्रदुर्भूत निर्वर्ण्य गपदिप्रवृद्धमनसिशयशरशोभ-प्रकम्पितहृदयकूपा मदनातुरा समभृत् तत्समकाल च परिचारिका समादिशदसौ युवा मदीयसदनमविलम्बितमानीयतामिति । तथे-त्युक्त्वा सा परिचारिका तस्मै यूने तद्वाचिक न्यवीविददेवं च तयाऽभिरित. सोऽपि प्रत्यवादीत्लोहजङ्घाह्वयो निष्किञ्चनो विप्रोऽहं

कथ द्रविणसाध्यं वाराङ्गनावेश्म प्रवेष्टुं शक्नोमीति। प्रथमदृष्टि-पातमात्रसजातानुरागा मे स्वामिनी सानन्यादृशी वारमुख्या त्वयि भृशं स्निह्यत्येतस्मात् कारणात् त्वा निमन्त्रयति, न तु धनलोभा-दिति तया चेटिकयोक्तं वाक्य पुन श्रुत्वा कौतूहलरिरसाभ्यां युगपदाकृष्यमाणस्तया सह स लोहजङ्घस्तन्निशान्तमगमत् ततस्तत्र संभोगरसोत्कर्षहेतुकपीनकुचयुग्मश्रोणिफलकाधिकाभिरामया राम-या संख्यातीतसुरतविदग्धकामुकसगमाधिगतबहुविधविचित्ररतिक-र्मनिपुणया सततकण्ठलग्नया प्रत्याख्यातपुरुषान्तरप्रवेशया निरतर-प्रत्यग्रीकृतप्राज्यरिरंसया तया रूपिण्या समं बहुतिथं कालं रममाण' सानन्दं तत्रोवास। एव निवारिताखिलधनाढ्यकामिसघ-संगमां वारविलासिनीमपि हिरण्योपार्जने विमुखीभूय समर्जितपूर्वं स्वीय स्वापतेय व्ययीकृत्य नक्तदिन तेन निस्स्वेन ब्राह्मणकामुकेन ररम्यमाणां तां पुत्री निशाम्यातीव मनसि दु खायमाना तस्या जनयित्री कुपितरतिशूरसार्थतीव्रदशनखण्डितनासिका नखानखि-प्रवृत्तनियुद्धसमयनिशितनखरोन्मूलितकेशपाशा स्वायत्तवल्लभा-पहरणरुषितप्रतिपक्षवारस्त्रीदष्ट्रासामिच्छिन्नकर्णपाली कलहज-व्रणकिणनिकरचिह्नितलपना द्वितीया कालरात्रिरिव भीषणाकारा पुरुषमासभोजना राक्षसीवोद्वेजयित्री मकरदष्ट्रा नाम मत्सरिणी शम्भली समुदीरयामास हे वत्से कथ नाम द्रव्योपार्जनोद्योगमपि परित्यज्य कुलागनेव वेश्या त्वमीदृशमकिञ्चनमकिञ्चित्करं ब्रह्मबन्धुमियन्त कालमुपसेवसे क्व कुटिललोकयात्रानिपुणा रूपा-

सुप्तोत्थितो लोहजघो महापतत्रिचंचूविदारितात् तस्माद् द्विपकलेवरान्निर्गत्य रत्नाकरवेलास्थितमात्मानं दृष्ट्वा विस्मयकोटिमधिरुरोह तदनु च दुरासदपार्वतदुर्गसहस्रप्राकारभित्तिमालासुगोपितां महापुरी विदूरादुद्वीक्ष्य तदभिमुखं प्रचचाल। तस्मिन्नेव मुहूर्तेऽकाण्डोपागतं तं मनुष्यं विलोक्य चेतसि सहसा समुत्पन्नरामरावणमहासंग्रामानुस्मृतिभिर्भीतभीतैः पुररक्षिभी राक्षसैर्मंक्षु विज्ञप्तमानुषागमनः सन् लकेश्वरो विभीषणो गृहीतमानुषजनुषो लोकोत्तरमहावीरस्य दाशरथेर्महिमशसित्त ग्रौदार्यस्य संस्मारं संस्मारं तद्गौरवार्त्तः सादरं तमात्मनोऽन्तिकमानीनयत् ततश्च स्वसमीप ग्रानीतं त मनुजमतिथिसत्कारेण पुष्कलेन संपूज्य भो मनुजद्विजन्मन् किं प्रयोजनमुद्दिश्य कस्माददृष्टमनुष्यसंचारं गम्भीरसमुद्रमेखलमिमं द्वीपवरमायातोऽसीति लंकाद्वीपप्राप्तिकारणं तं प्रश्रयणपूर्वमप्राक्षीत्। दैवेनोपनते भागधेयोदयपिशुनेऽस्मिन्नवसरे दुर्गतिनिमग्नोऽह गत्यन्तराभावाद् विभीषणमेनं किंचिद्वञ्चयित्वा भूरि हिरण्यमुपलप्स्य इति विचारयंस्तेनैवं पृष्टो लोहजंघो धृष्टनितवो दारिद्र्यादात्मानं मुमुक्षुस्तं प्रत्युवाच राजन् मथुरावास्तव्यो लोहजघनामा भूसुरोऽह हरिण्यरत्नादिप्राभृत प्राप्तुं साक्षात् पुण्डरीकाक्षेण समादिष्टोऽद्य भवत्समक्षमागतोऽस्मीति। श्रुत्वा तद्वाक्यं चक्रपाणिप्रसादनार्थमुदारधीर्लङ्काधीश्वरो विभीषणो महामूल्यशङ्खचक्रगदासुवर्णरत्नानितं प्राज्यमुपग्राह्यं तस्मायुपजहार। संप्राप्य तं महार्हमुपायनसंभार प्रीतिविकसिताक्षो

लोहजंघो राजानं विभीषणं स्मितपूर्वमापृच्छ्य तदर्पितं सुपर्ण-कुलोद्भवं मनोजवं महापक्षिवाहनमारुह्य समीरणातिगेन रहसा मथुरामुत्पपात ततश्च मथुरानगरीमवतीर्णः स वैकाले भूमितल-मुत्खाय लङ्केश्वरेण विश्राणितं कृत्स्नकनकरत्ननिधिं निगूहित्वा प्रोज्ज्वलवेषधारी रुचिरवनपुष्पमाली भ्राजिष्णुकुण्डलभूषितकर्ण-पालिर्दिव्यशङ्खचक्रपाणिधृतविष्णुरूपो विकटविहङ्गवाहनारूढः प्रियाया रूपिण्या वसतिगृहस्योपरि कृतस्थितिः श्रुतिपेयेन मधुरस्वरेण भो भो मदेकपरायणायै वारमुख्यायै दर्शनप्रसाद दातुं गरुडध्वजः पुरुषोत्तम आगतोस्मीति वारंवारमुच्चार-याम्बभूव। तामाकाशवाणीं श्रुत्वा पुलकितविग्रहा निर्गता रूपिणी चन्द्रिकाधौते व्योम्नि गरुडाधिरूढं पीताम्बरं प्रभास्वरालोकं जनार्दनमुद्वीक्ष्य ससम्भ्रम कृताञ्जलिर्देवदेव जगत्सृष्टिस्थितिसंहार-निदान भक्तवत्सल नमो नमस्तुभ्य करुणानिधयेऽनाद्यनन्ताय भूयो भूयो नमो नम इति स्तुतिपूर्वं साष्टाङ्गनमस्कारमकार्षीत्। अथासौ कृत्रिमविष्णुर्लोहजंघो महापत्ररथस्य पृष्ठादवतीर्य ता सानुक्रोश-मुत्थाप्य रूपिणि प्रसन्नोऽस्मि ते भक्तिविशेषेणेति निगद्य तया सम गर्भगृहं प्रविश्य च रोमाञ्चितवपुषमतिशयनिधुवनशीला मुहुर्मुहु कूजन्ती तां प्रकाम भेजे ततश्च त्रियामायाश्चरमयामेऽनारतसुरत-संभोगसुखितस्तमेव पक्षिराजमधिष्ठाय विहायसा क्वाप्यदर्शन-मयासीत्। प्रभातायां विभावर्यामुदिते भास्करे कृतस्नाना शुभ्र-निष्प्रवाणिसंवीताङ्गी प्रत्यादिष्टजनसभाषणा हरिणा स्वय

-संभुक्ताहं देवीति मत्वा वाचंयमतामाश्रित्य केवलं कृष्णपूजातत्परां कपटमुरारिवल्लभा तां रूपिणी प्रेक्ष्य सुतरां विस्मिता तज्जननी मकरदंष्ट्रा तामकस्मादङ्गीकृततूष्णीभावनिदान सनिर्बन्धं प्रश्नयति स्म हे बाले ब्रूहि केनापि मुषितचित्तवृत्तिरिव कथं तूष्णीमास्से जहिहि निष्कारणं मौनमिति । यद्यपि लक्ष्मीतुल्या वैकुण्ठजायाभूताहं पावनतदीयवर्ष्मसंसर्गविदातत्वात् साधारणमर्त्यधर्मभि. सार्धं संभाषणं न चिकीर्षामि तथापि दैवयोगात् त्वयि संजाताहं साग्रहमिदानी मौनव्रतकारणस्य पृष्टत्वादनिच्छन्त्यपि ते कथयामीति प्रस्तुत्याशुचिनिवारणार्थं धवलजवनिकान्तरिताकारा वासुदेवभार्यमन्या रूपिणी गरुडवाहनसाक्षाद्दर्शनात् प्रभृति संवृत्तं तत्संगमोदन्तं सगौरवमवूबुधत् । उपश्रुत्य तन्निगदितमश्रद्धेयं सदेहदोलाधिरूढा वृद्धशम्भली ततस्तस्यामेव निशीथिन्यां महापत्ररथवाहनं शङ्खचक्रधरं दिव्याकृतिं निजदुहित्रा प्रकामतो हृदिस्पृशा रहःकेलिं निर्विशन्तं वनमालिनं रहसि कपाटरन्ध्रसुषिरासक्तनेत्रा निरैक्षिष्ट ततश्चन्द्रमस्यस्तमिते विरहिणी कमलिनीमाह्लादयितुमिव कमलिनीरमणे सहस्रदीधितावुदयोन्मुखे यथापूर्वं तिरस्करिणीच्छन्ना दुहितरमभ्युद्गम्य वयोवृद्धापि नवनवतृष्णा सा मकरदंष्ट्रा प्राञ्जलि. प्रणम्य देवि परमेश्वरस्य प्रसादेन मर्त्यवपुषा देवीभाव समनुप्राप्ता त्वा स्तुतिशतेन स्तौमि तत् प्रसीद पुत्रि विश्वेश्वरभार्ये त्वद्भर्तुर्हृषीकेशस्य परमानुग्रहेणाय जनोऽपि जीवन्मुक्तो तूर्णमेव शरीरेणानेन नाकं धुलोकसभोगमनुबुभूषु.

स्वर्गमारोढुमुत्सुकायते देवि मामनुग्रहीतु तस्मै देवाय सकृपं विज्ञापयेति सादरमुपायाचिष्ट। तत पुना रात्रौ रूपिणीसगमाय समायातो देवकीनन्दनवेषधारी तया सप्रश्रयं विज्ञप्तनिजमातृस्वर्गमनसमीहः सन् स्तोक ध्यात्वेत्य निजगाद प्रिये बहुपुरुषासृवपा महापापा दुरात्मा ते जननी न खलु स्वर्गाय कल्पते तथापि त्वद्वचनानुरोधाच्छ्वो मदभिमतायामेकादश्यां पचचूडाकलितोत्तमांगा कपालमालिनी दिगम्बरा कज्जललिप्तदेहार्धा कुकुमारुणितापरार्धा मसीविलेपनसान्द्रानना मकरदंष्ट्रा विहायसा द्रुत त्रिविष्टप मया नेष्यते। ततोऽपरेद्युरेकादश्या ज्यौत्स्न्या स्तुतिपूर्वं रूपिण्या समर्पिता स्वर्गकामा नग्नीकृता कपालमालारूक्षितभुजान्तरालामपरूपा स्वर्गारोहणप्रमोदातिरेकरोमाञ्चितकज्जलसिन्दूरकुकुमरूपितसंहननां भयानकरात्रिचरीसरूपा ता वृद्धरूपाजीवा मकरदंष्ट्रा युगपत् पक्षिवाहने समारोप्य श्रीवत्सलाछनरूपधारी वैरनिर्यातिनोत्सुको रूपिणीरमणो लोहजघ. सहृष्टमनास्तरसोड्डीय क्षणान्तरे देवालयस्योच्छ्रिताया चक्राङ्किताया स्थूणाया दिगम्बरा विकृतरूपां ता स्थापयित्वा च तामब्रवीत् कुट्टनि क्षण प्रतीक्ष्यतामद्यैकादशीयात्रोत्सवप्रसंगेऽत्र मन्दिरे समवेतेभ्यो मदेकपरायणेभ्यो महाजनेभ्यः साक्षाद्दर्शनप्रसाद ददामीति तदनन्तरं च मक्षूत्पत्य व्योमस्थो गम्भीरां घोषणामकरोद् भो भो मथुरानिवासिन. शृणुत महाघोराकारा समग्रलोकप्राणापहारिणी मारी निपतिष्यत्यधुनेति। अथाशरीरिणी गगनादुद्भूता सरस्वतीमाकर्ण्यातिशयविभीषिता-

स्तत्रस्था जनसमूहा देवस्तोत्रस्वस्त्ययनमन्त्रोच्चारणैर्भृशं दिगन्त-रालं निःशेषं बधिरीचक्रुस्तत्क्षणं च सोऽपि लोहजंघ उपांशु विष्णु-पदात् कृतावतरणः पद्मनाभवेषमपनीय साधारणः पूरुषो भूत्वा तदेव विचित्रं प्रेक्षणकं दिदृक्षुर्महाजनमध्ये निभृतं तस्थौ। सापि देवलोकसंभोगगृध्नुः शम्भली स्तम्भपृष्ठनिहिता सती भूतलनिपत-नभयादतीव त्रासिता भुजलताभ्यां स्थूणाचक्रमवलम्ब्य हहो पतामि हंहो पतामीति तारं चक्रोश। आकर्ण्य महती विभीषिकामुपरि-दत्तचकितलोचनास्तामेव नग्नां कपालमालिनीं भीषणाकृतिमुद्वीक्ष्य सर्वे तत्रत्याः पौरा हे महादेवि मारि मा पप्तोऽस्माकं दयस्व महादेवि मा निपतेति सादरमञ्जलिं बद्ध्वा तां प्रार्थयांचक्रिरे तत्क्षणाच्च पुनर्हाहा सप्रत्येपोपरिष्टादधो निपतामि वीतधृतिरिति तया क्रन्दिते तेऽपि सर्वे तन्निपतनाशङ्काग्रस्ता अतिमात्रं बिभ्यतः सकरुणं विलेपुरस्मांस्त्रायस्व महादेवि मा पत मा पतेति। पतामि पतामीत्येवमुच्चैस्तमा क्रोशन्ती सा राक्षसीतुल्या मकरदंष्ट्रा च मा पत मा पतेत्यार्तस्वरमविच्छिन्नं कुर्वाणास्ते पौरजानपदाश्च भय-साध्वसदीर्घीभूतां तां सहस्रयामायमानां रजनिं कृच्छ्रात् कृच्छ्रादति-यापयामासुः। ततः प्रभाते कृत्स्नरात्रिजागरणोच्छूननयनाः सर्व-प्राणिप्राणापहारिमारीनिपतनत्रासोद्भ्रान्तचेतसः सबालवृद्धास्ते सकलजनसमूहाः स्वर्लोकगमनार्थसोपानमार्गमध्यस्थामिव प्रांशु-स्थूणावलग्नां दुर्गामिव करंकमालाभूषितवक्षःस्थलां किञ्चित्प-गलकितां स्वचित्तवृत्तिमिव कज्जलकुङ्कुमकर्बुरितमलिनदेहां निस्त्र-

पपुञ्श्चलीमिव नग्निका सर्वतोऽयशःप्रकटितनिजाभिधाना मृतप्रायां मकरदंष्ट्रावत्तीक्ष्णाशयां मकरदंष्ट्रां प्रत्यभिज्ञाय विदग्धरूपाजीवया विडम्बितबहुपुरुषयानया मुग्धा वयं सर्वेऽतिवेलं विडम्बिता इति स्तम्भात् तस्मात् तामवतार्य रे रे महादेवि दुर्गे मारि कथंचित् पतिताऽसीत्याक्रुश्य सारमेयीमिव पादघातं लोष्टघातं च प्रहृत्य पर.सहस्रपुरुषघ्नी पापमलीमसां योनिं करतलेन वैरूप्यविकृतं मुखमितरकरतलेन च प्रच्छादयन्ती तां तूर्णमपसारयाम्बभूवुः। एवंकृतशम्भलीगृहनिरसनप्रतीकारः सफलीभूतमनोरथो मथुरानिवासिजनप्रशसाभाजनीभूतः कनकरत्नराशिसमृद्धकोषो लोहजंघोऽनन्यसदृशी रूपिणी विधिवत् परिणीय यावज्जीव वीतज्वरो वीतदरिद्रभावस्तया पतिव्रतया साकं सहवाससुखमनुत्तममनुबभूवेति। इत्येवमतिवैरूप्याद्भुतदर्शनेन वसन्तकेन कथितामतिवैचित्र्याद्भुतरसनिस्यन्दिनीमाख्यायिकामनुश्रुत्य सन्तुष्टिसहर्षाम्याधिकविकसितवदनसरसीरुहा राजतनया वासवदत्ता मञ्जुलमञ्जुलं कटाक्षबाणं साकूतमुपकण्ठवर्तिने वत्सभूभर्त्रे चिक्षिपे। सोऽपि वीणाचार्यो वत्सभूमण्डलेश्वर उदयनोऽनल्पकालपरस्परपरिचयजनितविश्वासावर्जितमानसा कालक्रमानुसारेण दृढीभूतगाढानुरागबद्धाव्यभिचारिपक्षपाता सर्वंदमकुसुमायुधाज्ञावशवदा गन्धर्वविद्यार्थिनी वासवदत्ता ज्ञात्वा सहृष्टचेता. सन् धिषणसमधिषणस्य यौगन्धरायणस्य प्रज्ञासाहाय्येन तस्या अपहरणे मनो बबन्ध। ततोऽल्पीयसि कालेऽतीते योगप्रभावादृश्यरूपो लब्धवर्णो यौगन्धरायणो वत्सराजमुदयनं

पुन प्रच्छन्नमुपेत्य वसन्तकोपाक्षं पलायनसाधनमधिकृत्याममन्त्रत देव यथैव बलाभिमानगर्वितो धूर्तश्चण्डमहासेनोऽपौरुषेयेण कैतवप्रयोगेण त्वा जीवग्राहमग्रहीष्ट तथैव वयमपि तदीयकूटोपायप्रतीकारविधानार्थं तस्य दुहितरमाच्छिद्य सागपसरामो राजन् विद्यतेऽत्र वासवदत्तायास्तरस्विनी महाबला हस्तिनी यामधिरुह्य वसन्तकमखस्तया सार्धमद्य तामिस्रायाममुकममुकं पन्थानमनुसृत्य सत्वरं पलायस्व तदर्थमाषाढको नाम तस्याँ आघोरणोऽपि प्रचुरोत्कोचदानेन मयात्मसात्कृतस्त्वयापि पलायनार्थं ऋर्ग निभृतमेव सज्जीक्रियतां भवद्वर्त्मपरिरक्षणहेतोः पूर्वमधुना साधयामि भवदीयसख्युर्वनेचरेश्वरस्य पुलिन्दकस्यान्तिकमिति। मतिसचिवप्राग्रहरेऽप्रे प्रयाते ततस्तन्मन्त्रवचः प्रतिपद्य निश्चितगमनाध्यवसायां विस्रम्भस्नेहास्पदीभूतसहचरीकाञ्चनमालासमन्वितां राजात्मोद्भवां वासवदत्तां समादाय सवसन्तको वत्सराज उदयनो नक्तं सर्वेष्वन्तर्वंशिकप्रमुखेष्ववरोधरक्षिहस्तिपकेष्वतिशयमद्यपानक्षीबेषु निःसंज्ञं निद्रितेषु जवनकरेणुकाध्यारूढो महीनाथः शस्त्रपाणिरुदयनो राजकुलात् तरसा निष्क्रम्य ततो गोपुररक्षकान् भृशं प्रहृत्य तूर्णमदुद्रुवत्। तत्क्षणात् पुररक्षिभिर्विज्ञापितोदयनवासवदत्तापलायनोदन्ते तेनैव काकतालीयेन विस्मापितमनसि वसुधाधिपे चण्डमहासेने किंकर्तव्यतामूढेऽमेये च नगरे सहसोत्थितोल्वणकोलाहलसंक्षोभिते विनिद्रे सत्युद्दामामर्षज्वलनज्वलितो राजसूनुः पालको नडागिरि मतङ्गजेन्द्रं समारुह्य रंहसा द्रुतमुदयनमनुद्रुत्य पृष्ठतः गरोप

कार्मुकमास्फालयन् तेजिताग्रैर्नाराचैरजस्रं प्राहार्षीत् । धृतिसागरस्तरस्वी वत्सनृपतिरपि परिवृत्य कर्णपर्यन्तविस्फारितधन्वा बाणाभिवर्षणैस्त प्रतिप्राहृत । एवभूते व्यतिकरे मालवेन्द्रश्चण्डमहासेनो निकटवर्तिन ज्यायास तनूजमथादिदेश गोपालक गच्छ शीघ्र कनीयासं भ्रातरममर्पण वीर पालकमुदयनाभिद्रवणान्निवर्तय गच्छतु तौ वहुमतो वत्सेशो यथेप्सितमभीष्टा दिशमिति । शिरसि धृत्वा पितुराज्ञा सुग्रीवनाम्ना वायुवेगेनाजानेयेन सप्तिना तूर्णमनुधाव्य कौशाम्बीपतिना नियुध्यन्तं शूरमनुज सान्त्वयन्नुज्जयिनी निनाय । भूपतीच्छानुवर्तिनोस्तयोर्भ्रात्रो प्रतिनिवृतयोर्वत्सभूभर्तरि च विश्रब्ध निर्विघ्न प्रचलिते तत उत्तरेद्युर्मध्यदिने ललाटतपतपनकिरणपरितापित नखपच विन्ध्यभूध्रोपान्तमासाद्यानारताध्वपरिश्रमतृपार्ता दन्तिनी भद्रवती दुर्निवारपिपासावशाद् विषदूषितं कासारसलिलमुदरपूर पीत्वा युगपद्गीतचेतना तिग्मांशुपरिपाचिते पांशुले धरणीतले निपपात तत्समकालं च समस्तेष्वुदयनप्रमुखेष्ववनीनेषु सुतरा दुर्मनायमाणेष्वकाण्डे सरस्वती व्योम्न समुत्तस्थौ शशिवशावतस वत्सेन्द्र मायावती नाम विद्याधरयोपिदह हृदयशोषणाच्छापादद्यपूर्वं दुस्सहवेदनामयं काल भद्रवतीसज्ञा करेणुका समभूव, प्रेयसीसहितस्य तवोपकृत्य सप्रति मुक्तशापा सुचिरात् पुनर्लब्धविद्याधरीपदवी वासवदत्ताया जनिष्यमाणस्य त्वदीयौरसस्य भाविविद्याधरचक्रवर्तिनो भूयोऽप्युपकरिष्यामीति । आकर्ण्य भद्रवती भद्रवतीवाणी सप्रमुदितमना वसुधाधिपो

दत्तवासवदत्ताहस्तावलम्बन पादचारी शनकैः प्रचरन् निजागमन-निवेदनाय वसन्तकं सख्ये पुलिन्दकाय प्राहैषीत् ततश्चाल्पीयसि समयेऽतियातेऽग्रयायिवसन्तकदर्शितमार्गेण यौगन्धरायणसहितेन सुहृदागमनप्रहृष्टेन किरातेन्द्रेण पुलिन्दकेन प्रीतिपूर्वं स्वागतीकृतः सन् तस्य दुर्गपुटभेदनमनुप्राप्य तत्र दीर्घाध्वश्रमापनोदाय तां निशीथिनीमतिवाहयितु मनोऽकृत। अत्रान्तरेऽनुपद तूर्णमभ्येत्य यौगन्धरायणस्य सखा सार्थवाहः प्रणम्य स्मितपूर्वं तत्रस्थ राजान्-मिति व्यजिज्ञपदायुष्मन् मालवभूभृन्महाराजश्चण्डमहासेनोऽन्यो-न्यप्रेमप्ररूढिगाढबद्धहृदयौ युवा विदित्वा प्रीतमना· प्रसादोन्मुखो भूत्वा युवयोः पाणिग्रहणमहामहमुद्दिश्य प्रतीहारमद्य युष्मत्सकाशं प्रेषितवान्। इत्युपलभ्य शुभंयु प्रवृत्ति चरितार्थमात्मानं मन्यमानो दयितासखः उदयनो लज्जावैलक्ष्याधोमुख्यो दयिताया वासवदत्तायां प्रीतिप्रोत्फुल्लां दृष्टि सस्मितं निपात्य पार्श्ववर्तिनमपनीतवैरूप्यं प्रकृतिस्थं मतिसचिवाग्रण्यं यौगन्धरायणमवोचदिदानीं कौशाम्बी-प्रतिगमनायास्मदीया विजयध्वजिनी समाहूयतामिति तत्क्षणं च राजन् कतिपयेभ्यो वासरेभ्यः पूर्वमेतदर्थं सदेशहरं प्रेष्य मया-कारितः सेनानीर्महायशा रुमण्वांश्चतुरङ्गपरिपूर्णया वरूथिन्या समद्य वा श्वो वा ध्रुवमिहागमिष्यतीति तेन प्रत्युक्तेऽतीव प्रसन्नचेता· प्रशमामृतर· सततोत्थानशीलस्योपकारिणस्तस्य दूर-दृष्टिमभ्यस्तावीत्। सापि वरवर्णिनी सान्द्रानुरागरञ्जितहृदया परित्यक्तबान्धवा नृपतनया वासवदत्ता नगिन्मुखात् नामैव हृदयं-

गमा वार्तामुपश्रुत्य वैलक्ष्यविक्लवा निजगृहनिष्क्रमणव्रीडितेव नम्रितानना पितृस्नेह बहुमन्यमाना मनस्यतुलमानन्दातिशयमनुभूय सन्निकर्षवर्तिनं नर्मकथाकोविद वसन्तकमयि विचित्रकथाविदाम-ग्रेसर कामपि दीर्घाध्वश्रान्तहृदयप्रह्लादिनी कथामिदानीमुपवर्ण्य यदीच्छसीति सानुनयमवादीत्। आकर्ण्यतां देवि यदि शुश्रूषेति कथामुखे प्रस्तुत्य समयोचित पातिव्रत्यबृंहणमुपाख्यान कथयितु-मुपचक्रमे मनीषी कथानिधिर्वसन्तक । अस्ति पौरुहूताया ककुभि रुचिरदिवाकरोदयारुणसुषमारोचिष्णुपूर्वार्णववेलाकृतसनिवेशे सा-यात्रिकवाणिज्यार्पाजितहोरकहरिन्मणिपद्मरागवैदूर्यमुक्ताकार्तस्व-रखर्जुराद्यनन्तद्युम्नद्युतित–महाकोशतिरस्कृत–वैश्रवणनव – निधौ सह्यजनपदेऽचचललक्ष्मीविभ्रमभूमिरप्रतिमस्वापतेयवैभवसदासुखि-तपौरलोका सततस्पर्शनसुभगमृदुलगन्धवाहवाहिकपिशाशैवलिनी-कूलवर्तिनी ताम्रलिप्तापुरी यत्र बभूव किल धनगुप्ताह्वो धनाढ्यः सायात्रिक । सोऽनपत्यतादु खित पुत्रकामो जातु निजवेश्मनि बहूसख्यकान् विप्रयायजूकानुपनिमन्त्र्य कल्पितपूजाविधि सविनय-मभ्यर्थयाञ्चक्रे भो ब्राह्मणा कुलस्थितिकरमतानविच्छेदेन सपत्समृद्ध चिरन्तनमपि मामक गोत्र विनङ्क्ष्यति मनसि मेऽसहनीया वेदना सजाजायते तस्माद्धेतोर्भाविन पुनाम्नो नरकान्मा परित्रातु प्राप्त-काल मार्ग मे दर्शयतेति । सौम्य मा विषाद गमोऽस्मादृशाना शास्त्रविदा साहाय्येन सुकृतिनो मनीषितार्थ साधयन्ति यथा पुरा सोमकाभिधो यजमान. कोऽपि नृप कर्मकाण्डप्रमुखनानाविधाध्वर-

पारदृश्वना पुरोधसा निर्दिष्टमार्गानुवर्ती सत्त्वानां दशसाहस्रं प्रज्वलिते सप्ततन्तुहुतभुजि हवनीयमिवाहुत्य तनयमतं भार्यागत-प्रसूतं लेभे तथा त्वमप्यध्वर्युपुरस्सरैरस्माभिर्यथाविधि सम्यगनुष्ठास्यमानां पुत्रेष्टिकामिष्ट्वा नि:सदेहमपत्यरत्नमवाप्स्यसीति तमपुत्रं प्रतिबभाषिरे। ततोऽनेकतिथं कालमृत्विग्भिस्तैरहर्दिवि प्राज्योपायनदक्षिणावितने पुत्रक्रतौ विधिपूर्वं विहिते सति ततोऽचिरेण निष्पुत्रतायातनापेपीड्यमानहृदयस्य तस्य प्रमाणातीतानन्दाकर: कुलधुरंधरो गुहसेनो नाम तनूजन्मा सजज्ञे कालक्रमेण च शुक्लपक्षे वृद्धिं गच्छन् बालचन्द्रमा इवानन्दपीयूषमयो मातरपितरौ नितरामानन्दयन् सववृधे। अथ व्यवहारज्ञं वयःस्थं तं वाणिज्ये निवेश्य जनको धनगुप्तस्तस्यानुरूपां वधूं सर्वत्र परिमार्गयंस्तत्परिणयचिन्ताकुलो बभूव। तत. कदाचिन्महाधन. सांयात्रिको धनगुप्त. पुत्रद्वितीयो महार्हरत्नविक्रयार्थं नावा विस्तीर्णं रत्नाकरं बहुभिर्दिवसैरुत्तीर्य द्वीपान्तरमियाय तत्र च तत्रत्यस्य धर्मगुप्ताभिधस्य वणिज पन्यं प्रविश्य प्रत्यग्रयौवनविकस्वरवपु:प्रकर्षातिशोभिनी सौजन्यगुणभूषा निष्कलकस्मेराननाकृष्टजनलोचनां स्मितिसुभगा देवस्मितानाम्नी तदीयां दुहितरमवलोक्य च तद्गुणावर्जितचेता निजपुत्राय तां तमभिययाचे तथापि सार्थवाहो धर्मगुप्तस्तु सुविप्रकृष्टजनपदान्तरनिवासिने समस्तगुणगणोपेतायापि तस्मै यूने दुहितृवात्सल्यात् तां दातुं नाभिललाष। तस्मिन्नेव समयेऽप्सरा मन्मथवल्लभा रतिरिवाक्लिष्टकान्तिमद्वपुः सा देवस्मिता रति-

दयित द्वितीय मीनकेतनमिव श्लाघनीयसौन्दर्यसौशील्यविभूषित-स्वरूपं त गुहसेन दृष्ट्वैव युगपदुत्थितमनमिशयाज्ञा-वशीकृतहृदया साभिलापा भूत्वा तस्य यून कृते हृदि सद्योऽकुरितस्य प्रेमप्रसून-स्यार्थे चात्मान समर्पयितु कृतबन्धुजनपरित्यागनिश्चया सहचरी-द्वारा निर्दिष्टे सकेननिकेतने निशि प्रणयिन तमभिससार। सोऽपि गुहसेनस्तस्या. प्रथमदर्शनमात्रोद्भूतमदनमदातुरोऽभिसरणरोमा-चितसर्वांगो भूत्वा लब्धजनकानुमतिस्ता स्वयवरा सुन्दरी समादा-यार्धरात्रे पित्रा साक तस्माद् द्वीपादुपाशु विनिर्जगाम। तत कालेन ताम्रलिप्ता समासाद्य सकलबन्धुसुहृज्जनाभिनन्दितयार्थयावद् विहितपाणिपीडनमहोत्सवयोस्तयोर्वरवध्वोरुद्दाममन्मथामृतनिर्झर-ससिक्तयो सुदृढबद्धमूलोऽनुरागप्ररोह शनै शनैर्वर्धमान प्रौढि ययौ। ततोऽनेकेषु सवत्सरेषु व्यतिक्रान्तेष्ववारणीयकालपाशाकृष्टे प्रवयसि पितरि कुलधुर्यस्य वाणिज्यकृतमुखस्य देहजस्य स्कन्धे पारपरिण-कुलव्यवहारधुर न्यस्य दिष्टान्तमुपगते वणिग्वरो गुहसेनोऽपि वैश्यवृत्तिलब्धकीर्ति. सन् बान्धवमित्रगणै प्रोत्साह्यमानोऽतिविदूर-स्थकटाहद्वीपप्रयाणे मनो ववन्धस्तदनु च गृहाभ्यन्तरे प्रविश्य हे प्रियतमेऽदभ्रहिरण्योपार्जनार्थ कतिपयदिनान्तरे समुद्रयानेन कटाह-द्वीप यास्यामि तद् धैर्येण धैर्येण नयने निमील्य त्वयेहस्थया मम प्रत्यागमनं प्रतीक्ष्यतामिति विरहाशकाविह्वला दीनदीना साश्रु-वदना दयितभार्यामभिवभाषे। अयि नाथ कियद्दूरे वर्तते कटाह-द्वीपं कदा प्रत्यागमिष्यसि तत्रगत सुरूप वियोगसमयाननुभूतमत्स-

भोगरग त्वा तत्रत्या: सुभगा वामलोचना गम्भीराया स्मरवागुरायां सहेल कटाक्षबाणैर्नूनं निपातयिष्यन्ति हे प्रियतम कथं नाम प्रयाणाय त्वामनुजानामि मया सह गच्छान्यथा मां पुनर्न द्रक्ष्यसीति भर्तृविरहेपासहिष्णुरजस्रनिपतद्बाष्पबिंदुसंततिनिष्पादितमुक्तावलिविलसच्चारुवक्षोरुहा गाढानुरक्तप्रेममञ्जरी सा देवस्मिता दयितस्य पत्युरश्रुक्लिन्नं मुखं तृषितया दृशा पायं पायं सविषादं प्रत्युवाद। एवंकारं वाणिज्यव्यवहारविज्ञेषु ज्ञातिमित्रेषु द्वीपयात्रा प्रति प्रोत्साहयत्सु भार्यया तु निषेधन्त्या किंकार्यतादोलायितमनाः सभार्यः सशितव्रत स पोतवणिग् हे प्रभो संशयं मे छिन्द्धि प्राप्तरूप मार्ग दर्शयेति प्रार्थयमानोऽर्धेन्दुमौलिं पार्वतीजानिमुपासाञ्चक्रे। तयोर्मिथ प्रणयसंदेहापन्नयोर्जम्पत्योरुपवासनियमप्रीणितो वृषभवाहन शंभु स्वप्ने साक्षादाविर्भूय युवामेकैकं कमलमिदमुपाददायामवश्यभाविनि विरहे यदि युवयोरेकः शीलखण्डनेन प्रणयभङ्गं विधास्यति तर्ह्यपरस्य करे धृतं कमलं सपदि परिम्लास्यतीति स्मितपूर्वं व्याहृत्य प्राधान्येन शीलसंरक्षणार्थं कोकनदद्वय तान्याभतिससर्ज। तदनु सुप्तोत्थितौ तौ प्रणयिनौ जायापती परस्परस्यानुरागरक्तं हृदयमिव भक्तवत्सलेन कैलासवासिना कृपानुरेनगा स्वयं हस्ते न्यस्त लोहितसरसीरुहं प्रत्यक्षीकृत्य जहृषतुस्ततश्च शुभंयुगयुगे पुण्याहे शान्तिसुहृज्जनाशीर्वादप्रमुदितो गृहस्थेन. सस्नेहं प्रियजायामापृच्छ्य तदेव शाम्भवरक्तसरोजं हस्ते सगौरव धृत्वा प्रतस्थे। तदानीं पारावारवेलापर्यन्त सगोत्रवधूभिः सम तमनुसृत्य तस्मिन्

भर्तरि समुद्रप्रवहणमधिरुह्य दृष्टिगोचरातीते प्रथमवियोगानलसतातप्यमाना नि.शव्द रुदन्ती करतलधृतरक्ताम्बुरुहनिक्षिप्तलोचना सा देवस्मिता सखेदं गृहमाजगाम। अथ काले कटाहान्तरीपं समुद्रयानपात्रेण प्राप्य व्यवहारकोविद स रक्ताम्बुजपाणिर्गुहसेनो महार्घनानाविधमणिचामीकरभाण्डक्रयविक्रयतत्परोऽल्पेनैव कालेन परिपणाधिकफलप्राचुर्योदयेन लाभवान्शनै शनैर्बहुकृत्वो वृद्धि गतेन फलेन रत्नभाण्डवाणिज्य चक्रे तं च तथाभूत प्रत्यग्रविकसितमिव सतताम्लानमरुणवारिरुह करे धारयन्त विलोक्य विस्मितमनसश्चत्वारस्तरुणवणिज. किमप्यत्राद्भुत कारण स्यादिति मनसि विधाय तज्जिज्ञासाप्रेरितकौतुकास्त निपुणेनानवरतमद्यपानेन निर्भरं क्षीवयित्वा हस्तगृहीताम्लास्नुरक्तकुशेशयगता वार्तां तं सकौतुकमनुयुयुजिरे पृष्टश्चासौ निसर्गपरिमितभाषणशीलोऽपि मदावस्थावाचालो भूत्वा तद्गत सर्व निर्विचार कथयाम्बभूव। मन्यामहे यदय कोकनदपाणिर्गुहसेन स्वकार्यवशादत्र सुचिर निवत्स्यति तद् वय सर्वे ताम्रलिप्तामविलम्बित गत्वा तस्य पतिदेवताया शीलवचना कथचिद्युक्तित करिष्यामस्ततस्तस्या सुचरिताया सद्दूषिताया प्रतिनिवृत्य तस्य परिम्लान शैवपद्म सपरीक्षितास्मह इति मिथ. समन्त्र्य दुर्निवारकौतूहलावर्जितान्तरङ्गास्ते दुरात्मानो वणिग्युवानो निगूढ ताम्रलिप्ता प्रत्यर्णवयानेन सज्जीकृतदीर्घाध्वसंभारा. प्रतस्थिरे। कालेन समासाद्य ता नगरी ते चत्वारो देवस्मितासङ्गमकामुका: क्वचिद्देवालये योगकरण्डिकामिव

नाम्ना योगकरण्डिकां प्रव्रजितां परातिसंधानप्रवीणां सम्भावितां यदृच्छयाभ्युपगम्य तदनुज्ञया तत्रैव निवसन्तो जातु परस्परपरिचय-जनितेन विश्रम्भेणाभ्यन्तरीकृतायै तस्यै ताम्रलिप्तागमनप्रयोजन-मुपांशु कथयित्वा हे अम्ब यदि त्वद्योगानुभावेन सार्थवाहभार्या प्रोषितभर्तृका चिरानिर्विष्टसुरतसम्भोगा देवस्मितास्माभि सम-च्छेत तदा तुभ्य प्रचुर द्रविणं समर्पयिष्याम इति तामूचुः । हे पुत्रका विद्यते मेऽन्तेवासिनी सिद्धिकरीत्यन्वर्थसंज्ञा समीहितसर्वार्थ-सिद्धिकरी योगविज्ञानप्रभावशालीनिर्नी सर्वातिरिक्तप्रशंसामुपेता यदीयेन माहात्म्येन ता पतिव्रतामपि देवस्मिता युष्मद्वशवर्तिनीम-चिरेण ध्रुव कर्तास्मीति धनलोलुपा प्रभूतद्रव्यार्जनाशापरितुष्टा कुटिलनीतिप्रयोगकोविदा सा तापसी प्रत्युवाद । आकर्ण्य मधुरि-मनिस्यन्दिनी श्रवणप्रीतिकरी तस्या वाचं देवस्मितानङ्गमप्रत्या-शापुलकितवपुषः काममोहिताशयास्ते युवानः प्रीतिपूर्वं ता पप्रच्छुर्हे भगवति पीयूषसकाशेन भगवद्वचसा नूनमनुगृहीता. स्म. किन्त्वेकैव विविदिषेयमस्मान् वाचालीकरोति कथ्यतां यदि न रहस्य कीदृग्बुद्धिवैभवा किंप्रभावा सा ते शिष्या किं वा दुष्करं तयाकारीति । एव चतुर्भिस्तैर्युवभि पृष्टा सा वृद्धप्रव्राजिका स्वशिष्यायाश्चमत्कारक्षम चरितमुपवर्णयितु प्रारभे श्रूयता कदा-चित् सा मे शिष्योत्तमा कूटोपायचिन्तननिपुणा परमर्मस्थानहरण-निष्णाता पद्मनिभवानमतिमती सिद्धिकरी धनदत्तनामधेयस्य महाधन महासार्थवाह वाणिजाद्रु श्रुत्वातिनिपुणेन गुप्तमुपायेनी-

बैषा तमाश्रित्य गृहकृत्यान्यतन्द्रितेन मनसा सम्यक्कुर्वन्ती विश्वस्तस्य तस्य वणिजो महामूल्यसुवर्णरत्नराशिं सर्वस्वभूत प्रातस्तरां चोरयित्वा त्वरितगतिस्तस्मात् पत्तनाद्रहोऽपससार। अथ विविक्तेऽरण्यवर्त्मनि सत्वरं गच्छन्ती पृष्ठारोपितलोप्त्रभारावनम्रपूर्वकायां तां यदृच्छयोद्वीक्ष्य धनलोभात् ता जिघांसुः कोऽपि भयंकराकृति. पश्यतोहरो वामहस्ते मुरजं दक्षिणहस्ते तेजितधारा क्षुरिका धृत्वा साक्रोशं पृष्ठतोऽनुदधाव। त घोरालोकं मलिम्लुच दृष्ट्वा न्यग्रोधतरुतले सपद्युपविश्य च सा धृष्टकितवी सिद्धिकरी प्रमुक्तकण्ठं सशोकमिव रुदित्वा कण्ठनिरुद्धाश्रुगद्गदं सकृपणं तमभिबभाषे सौम्य कलहकुपितेन पत्या गेहान्निर्वासिता क्षीणपुण्या मन्दभागिनी जीविते निराशा साप्रतमात्महत्या कर्तुमिहागतास्मि तेन हि मदर्थेऽस्य न्यग्रोधशाखिन ऊर्ध्वशाखाया दृढलतापाशं बधानेति। यत इयं वराकी स्वयं मर्तुमिच्छति ततः किंनिमित्तमिमामाहं व्यापादयामीति मनसि विधाय पाटच्चरस्तं महीरुहमधिरुह्य कठिने विटपे पाश बबन्ध तत्समनन्तरं चावरुह्य हे वासु तव मरणार्थं पाशं सज्जीकृतवानहं तच्छीघ्रं वृक्ष स्तोकमारुह्य मया धृतमिदं पाशमण्डलं कण्ठे कुरुष्वेति समुदीरयामास। तदनु सा वञ्चुकी सिद्धिकरी कातर्यतरलिताक्षी मूढबुद्धिरिव सगद्गद तं पप्रच्छ कथमुद्बन्धनं विधीयते तत् स्वयं दर्शयित्वा मां शिक्षय येनाहमात्मानमधुना मारयामीति। निशम्य तद्वचो हिरण्यलोलुपाविमूढविवेक. स पश्यतोहरो मुरज चरणयोरधस्तात् स्थापयि-

त्मा तद्गुरिरणो हे मद्गने पर्यव कुर्विति निगद्य पाशमण्डल स्वकीये कण्ठे परिवेष्टयामास । तस्मिन्नेव निमेषे सा सर्वधूर्ताग्रगामिनी मे शिष्या सर्वाकारतीव्रेण पादप्रहारेणाह्लाय तं मृदङ्गमपचिक्षिपे ततश्चासौ परस्वगृध्नुः पापो दस्युर्ममार । अत्रान्तरे वणिक्सर्वस्वापहारिणी निद्धिकरी चोरत्पां सर्वत्र परिमार्गयन्त. क्रोधारुणित-नेत्रा सार्थवाहभृत्याश्चोरितनिजविभुनि.शेषरिक्था पापिष्ठां तां पादपमूले निषण्णां दृष्ट्वा तस्माभिदुद्रुवुस्तत्क्षणाच्च सापि बद्धमुष्टीनुद्यतदण्डान् रे रे पापे तस्करि तिष्ठ तिष्ठेति तारमाक्रुश्य द्रागभिपततस्तान् पुरुषानुद्वीक्ष्य मधूत्प्लुत्य भूरुहाग्रे नीरन्ध्रपर्णनचयपरिच्छादितकलेवरा सती तत्र निभृतमासाञ्चक्रे । असौ कदर्या कुस्त्री पृष्ठे लोप्त्रं वहन्ती कपीव तूर्णमुत्पत्यास्यानोकहस्योपरिभागे प्रच्छन्नमास्त इति व्याहृत्य तेषां वणिगनुचराणां मध्यादेकस्तमेव वनस्पतिमध्यारुह्य तदभिमुखमुपससर्प । अतिनिपुण-शाठ्यप्रयोगपारंगता परमार्थतोऽचिन्त्यनिजसहजप्रतिभानपरचेतो-मोषणदक्षा सा मायाविनी तत्क्षणं निकटोपायातं तं पुमांसं समुद्वीक्ष्य सहसा सर्वकपकुसुमायुधपौष्पशरोपमान् मुग्धपुरुषहृदय-मर्मभेदिनः पेशलकटाक्षविशिखान् सविभ्रममभिवर्षन्ती हंहो सुभग किं न जानासि सततमहं त्वयि स्निह्यामीति केवल त्वदर्थे मया मुषितमेतत् स्वापतेयमशेष ते दीयते तद्धृदयवल्लभ मदीयं रतिगर्व-स्वमघर परिचुम्बंहि मया सह निधुवनामृतरसं निर्विशेषमुषस्वा झटिति संजातमदनावेगविमूढ तं भुजलताभ्यामतिदृढमालिलष्य

परिचुम्बन्ती जिह्वया जिह्वां लिहन्ती च परमप्रीतिघूर्णितनेत्रस्य भृशं दण्डायमानं मेहनं स्वरतिमन्दिरे सरभसं निवेशयितुमुद्यतस्य कामुकस्य जिह्वां प्रसह्य दन्तैर्युगपत् परिचिच्छिदे । तस्मिन्नेव क्षणे तीव्रवेदनाभिभूतोऽसौ तपस्वी लल्ललल्लेत्यविस्पष्टशब्दोच्चारणपुरस्सरं क्षितितले बभ्रंशे तं च दृष्ट्वा मुखादुल्वणरुधिरोद्गारिणमतिभृशं व्यथमानं ते सर्वेऽन्ये भीतभीता राक्षसीग्रस्तोऽयं वराक इति मत्वा सर्वासु दिक्षु जवादपसस्रुः । ईदृक्प्रतिभानप्रभावा समग्रमायाविनीपुरोगामिनी मेऽभिमता शिष्या तापसीमतल्लिका सिद्धिकरी ततोऽत्रागत्य यथावृत्तवृत्तान्तविज्ञापनपूर्वकं वणिक्सर्वस्वं लोप्त्रं ममोपाहार्षीत् सम्प्रति तु कार्यान्तरवशाद् बहिर्निर्गता साधुनैव प्रतिनिर्वर्तिष्यत इति । इत्थं मायोपजीविन्या योगिन्या स्वशिष्याचरिते साटोपमुपवर्णिते सैव विश्रुता कौटिल्याजीवा मायायोगिनीनामग्रिमा सन्यासिनी सिद्धिकरी प्रादुर्भूय भक्तिप्रह्वेण मनसा तां वृद्धां विदग्धतापसीवृन्दारिकामाचार्यां प्रणनाम तदनन्तरं च तत्रोपविष्टास्ताश्चतुरो यून सकौतुकमवलोक्य हे अम्ब वैदेशिका इव दृश्यमाना युवान एते के कथ्यतामिति तामप्राक्षीत् । अयि पुत्रि ते स्वागतं शृणु विदूरवर्तिनो द्वीपान्तरात् समायाता एते वणिग्युवानो नो बहुमता अनितरस्त्वत्साहाय्येन संप्रति प्रवासस्थितस्य सायात्रिकवरस्य भार्यासङ्गमं चिकीर्षन्तीति प्रस्तुत्य विस्तरशः कथिततदीयागमवृत्तान्ता सा योगिनी योगकरण्डिका स्वीयामन्तेवासिनीं सिद्धिकरीं तेभ्यः पारदार्यचिकीर्षा-

न्धीभूतमनोम्यो न्यवीविदत्। ततः कार्यसिद्धये तैः संमन्त्र्य सशिष्या मायाविनी योगकरण्डिका देवस्मितादर्शनार्थं तद्गृहं शनैरयासीत् तत्र चासाद्य बाह्यद्वारि स्थितं यष्टिधरं प्रतीहारं दर्शं दर्शं सोत्सुकमालिङ्ग्य हे अङ्ग पुण्यवती पूर्वजन्ममित्रं त्वां सुचिरात् पश्यामि किं कुशली भवानिति सहर्षमिव निगद्य तस्मै मोदककरण्डिका दत्त्वा च प्रमुदितेन तेन मुग्धद्वारपालेनान्तः प्रवेशिता तत्र पुष्पवृक्षमालाविराजितेऽङ्गणे विकटाकृतिं सामिविवृतास्यदर्शितभीषणदंष्ट्रापक्तिं सारमेयीमद्राक्षीत्। सापि कुक्कुरी तां शिष्यासहितामदृष्टपूर्वामागन्तुकीमनिष्टामिव निर्वर्ण्योच्चैस्तरां भषन्ती तां दंष्टुमेकपदेऽभ्यपतत् ततश्च शुनीभषणकोलाहलेन बहिर्दत्तेक्षणा पतिव्रता देवस्मिता प्राङ्गणे प्रादुर्भूते रोहितवसनसंवीते प्रव्राजिके दृष्ट्वा पारिपार्श्विकां प्रेष्य वासगृहं प्रावीविशत्। प्रविश्य, शिष्यान्विता सा योगिनी भर्तृविप्रयोगसंतापतनूकृततनूमसूर्यं पश्यां यथावद्विहितादरा देवस्मितामाशीर्वादपुरस्सरमयि साध्वि स्वप्नेऽप्य दुर्विषहपतिविरहानलदग्धप्रायां शीलरक्षानिरता प्रौढयौवनस्यामतिस्पृहणीयरूपलावण्यशालिनीमपि दीर्घकालाभुक्तप्रियतमसंभोगसुखां विफलीभूतमात्मनस्तारुण्यं निन्दन्ती प्रोषितभर्तृकां त्वा साक्षात्कृत्वा दीनवत्सलायाश्चन्द्रशेखरवल्लभाया. पार्वत्या वचनात् त्वद्दर्शनार्थमायातास्मि कथय कीदृशीं मानसिकीं व्यथामसह्यपीडे विरहेऽनुवोभवीषि प्राणसमेन विनाकृतायास्तत्परिरम्भणपरमानन्दसुखविवर्जितायाः. संवत्सरशतायमा-

-नान्येतानि दिवसानि दीर्घदीर्घनिश्वासेष्वनारतप्रवहद्बाष्पप्रवाहेषु कथंचित् कथंचिदतिवाहयन्त्या. प्रियभर्तुं सस्पृहं सततमनुस्मरन्त्यास्ते दयतेतमा मे मनोऽपीत्यादिभिर्मधुरैर्वचोभिस्ता सकृपमिव सान्त्वयित्वा तदीयवासगृहान्निरगात् । अपरेद्युरतितिक्तमरीचचूर्णसान्द्रावलिप्त पिशितपिण्डमादाय यथापूर्वं शिष्याकृतानुयात्रा गुहसेनवसतिगृहं प्राप्य सा योगकरण्डिका प्राङ्गणस्थायै शुन्यै तदेव मांसपिण्डं प्रादात् । सापि बुभुक्षिता सारमेयी साधुवादार्थहस्ततालस्थाने पुच्छमितस्ततश्चालयन्ती घ्राणतर्पणमकाण्डोपनतं सुस्वादु मांसशकलं यथातृप्ति साकल्येनाभक्षत् । यावत् सा कुक्कुरी कटुमरीचजनितपरितापाक्षमा रसनां बहिर्निकृष्य जलसंतति नासाविवराभ्या नेत्राभ्यां च निस्यन्दमाना तीव्रवेदनया सुतरामदोदूयिष्ट तावदभ्यन्तरे शिष्यया साकं प्रविश्य देवस्मितया पुष्पफलादिनार्घेण सभाजिता सा वृद्धा मायोपजीविनी योगकरण्डिका सहसा साश्रुनयना रोदितुं प्रावर्तिष्ट । भगवति कस्मादकस्माद् रुदिषीति तया पतिदेवतया पृष्टे सा तापसी सखेदमिव प्रत्यवोचत् सुभगे किं न पश्यस्यजस्रनिपतदश्रुविलिन्नाक्षीं त्वदीयैषा सारमेयी जन्मान्तरसहचरीं मां स्मृत्वा रोदिति येनाहमपि प्राप्तशुनीभावां कृपणामेनां प्रत्यभिज्ञाय दयाविष्टमानसा रोदिमीति तत्काल च बहिरजिरे पुष्कलनयनसलिलोक्षितवदनां रुदन्तीमिवातिदु खीयन्ती स्वकीया शुनी समुद्वीक्ष्य विचित्रीकृतचेतसा देवस्मितया किमेतदद्भुतमिति निगदिते

सा योगिना पुनरब्रवीत् सौभाग्यवति गृहिणि श्रूयतां यदि बुभुत्सा पूर्वस्मिञ्जन्मनि कस्यचिद्राजदूतस्याग्रजन्मनो द्वे धर्मपत्न्यावहमेषा चाभूव राजकार्यवशादावयोर्भर्ता तु मुहुर्मुहुर्नानाजनपदान्तराणि प्रायासीत् प्रवासस्थेऽस्य भर्तरि स्वनैसर्गिकेच्छानुसारेण स्वैरं स्वैरमनेकपुरुषमैथुनोपभोगसौख्यानि परमानन्दमयान्यभीक्ष्णं निर्विशती प्रकृतिसुभगमिन्द्रियग्रामं यथातृप्ति पर्यतीतृपं विश्रृङ्खलेन्द्रियाज्ञाकारिणी मनोनुकूलविविधविषयसंभोगसुखिता समस्तपुरुषकामुकी संवाह मनुष्य-प्रकृत्यनुरोधिना सततेन्द्रियवर्गतर्पणेन पुण्यकर्मणेह जनुषि सर्वलोकपूजितयोगिनीस्थानं प्राप्य जातिस्मरा भूतास्मि किन्तु सेयं मे सपत्नी मौर्ख्येनाज्ञानेन च भर्तृभक्तिविमूढचेताः केवलं शीलरक्षणमेव परमो धर्मः कुलस्त्रीणामिति मनसा कृत्वा पातिव्रत्यमेव समरक्षीदित्थंकारं निसर्गरुचिरविषयोपभोगपराङ्मुखी कर्हिचिदप्यदृष्टभास्करकिरणा मूढा पतिदेवता सेयं मे प्रतिपक्षकामिनीन्द्रियग्रामनिग्रहरूपेण मनुष्यधर्मविरोधिना पापकर्मणा जन्मनीह तिर्यग्योनौ सजाता दीर्घरता सारमेयी भूत्वाद्य मद्दर्शनेन जातिस्मरा जन्मान्तरस्यानुस्मरन्ती रोदिति हन्त शश्वद्विषयसमुपभोगोन्मुखेन्द्रियग्रामाज्ञावशंवदतैव परमो मनुष्यधर्म इति कथं त्वया न ज्ञायतेऽयि पुण्यवति त्वमपि परमधर्मज्ञानेनाज्ञानं सर्वथा जहीहि यदि कमनीयं स्व.श्रेयसं कामयस इति। आकर्ण्यैवं प्रव्राजिकया निर्लज्जमुदीरितमधर्म्यमयशस्करं पापिष्ठं वाक्यं नूनमेषा निकृष्टतापसी मम शीलविप्लवाय समायाता स्यादिति मत्वा

निर्दोषसदाचारविभूषितहृदया मनस्विनी देवस्मितेति प्रत्यवोचत् परमपूज्यतपोधने भगवति मूढया मयेयन्त कालं भगवन्निर्दिष्टोऽयं धर्मो न व्यज्ञायि तत् प्रौढिं गतां यौवनसंपदं सफलीकर्तुं मां केनापि स्पृहणीयेन पुसा सानुक्रोशं संगमयस्व । इति निशम्य निजनियोगसिद्धिप्रत्याशाप्रहृष्टमानसा सा देवदासी योगिनी सहर्षं ता प्रत्यवादीत् सुष्ठु निर्धारितोऽर्थोऽयं त्वया तत् सतत धर्ममार्गानुरोधादपुन.प्राप्यं रमणीयं सफुल्ल यौवन नि.सीमसुरतमहोत्सवेष्वभ्यधिक संफुल्लय हे सुभगे मदीयाश्रमे ये द्वीपान्तरायाताश्चक्षुष्याकृतिमन्तश्चत्वारो रतिशूरा वणिग्युवानस्तिष्ठन्ति तांस्त्वदर्थेऽत्र सायमानेष्यामीति । एवमुक्त्वा प्रव्राजिकाधमायां तस्यां निर्यातायाममर्षातिरेकताम्रानना सा प्रज्ञावती देवस्मिता सरोषं परिजनमवदन्निःसंशयमेते कापुरुषा शश्वत्प्रत्यग्रकोकनदं भर्त्रा हस्ते धृतं दृष्ट्वा संजातकौतूहल्यास्तं मदिरा पाययित्वा साकल्येनोपलब्धतद्गतवार्ता मच्चारित्रखण्डनार्थं पत्यौ तत्र चिरस्थायिनि नूनमिहागता स्युरसावपि कुयोगिनी तेषां साहाय्यकारिणी चारित्रकवचां मां सकललोकपरिजुगुप्सितमुत्पथं निनीषति तद्वयमपि यथायोग्य प्रतीकार निपुणमुपयुञ्जीमहि, गत्वा लोहमय सारमेयस्य चरणं व्योकारेण शीघ्रं कारयत मदिरापणादतिमदयित्नुधत्तूरकमिश्रिता कादम्बरी क्षिप्रमानीयतामिति ततश्च सहस्राशावस्तं गते स्ववेषधारिणीमेकां परिचारिकां निजस्थानेऽस्थापयत् । अथ प्रदोषे सा योगिनी सुतरामहंपूर्विकया मिथो विवदमानेभ्यस्तेभ्यो वणिग्भ्य एकं सिद्धि-

करीवेषधरमुल्वणाकल्पमण्डित तरुण देवस्मितावासगृहमानीय तत्र त स्थापयित्वा निभृत निरगात्। सोऽपि रतिलम्पटो युवा देवस्मितावेषधारिणी वरारोहां पीनस्तनी वाजीकरी चेटीमवाप्य दुर्निवाररिरंसाप्रेरितचेतास्तयानिशं दीयमाना धत्तूरचूर्णमिश्रिता कादम्बरीमाकण्ठं पीत्वा शिथिलितवसनो नि.सज्ञः शयनतले निपतति स्म। तं तादृगवस्थं विफलीभूतदेवस्मितासङ्गमाशं निरीक्ष्य तस्या. परिजनस्तस्य ललाटतटे प्रज्वलितज्वलनतप्तेन लोहश्वपदेन शश्वदविनश्वरं लाञ्छनं कृत्वा हृतवस्त्राभरणं दिगम्बरं पुरीषाधाने सहेलं प्राक्षैप्सीत्। अथ प्रत्यूषे प्रबुद्धोऽसौ वराको नग्नीकृत्य पुरीषखातके निक्षिप्तं व्रणितभालमशुचिनरके पतितमिवात्मानं सनिर्वेदं परिज्ञाय कृच्छ्रात् प्रक्षालितदुर्गन्धि-विग्रहो ललाटार्पितचीरच्छन्नश्वपादाङ्को दिगम्बरो योगकरण्डिकाश्रममागत्य च केवलमहमेवैको हास्यास्पदं मा स्म भूवमिति विचारं विचार्य हे सुहृदो यथासुखं देवस्मितासङ्गमं कृत्वा प्रतिनिवर्तन्तं मां शास्त्रहस्ताः पश्यतोहराः प्रहृत्य मम सर्वमचूचुरदिति तेभ्यो वितथमचकथत्। ततो दिनत्रय तेनैव प्रकारेण द्वितीयोऽपि तृतीयोऽपि चरमोऽपि शेषा रतिशूरंमन्या देवस्मितापरिजनेन परितप्तायोमयदीर्घसुरतचरणलक्ष्म ललाटे दत्त्वा खलीकृत्य च विष्ठाकूपेऽवक्षिप्ता अभूवन्। एवंकारं तत्त्वतो यथार्थसंज्ञायाः सर्वधूर्तापुरोगामिन्या योगकरण्डिकाया योगकरण्डिकायामुन्मार्गादवपतिता एते चत्वारो युववणिजस्तीव्रशिर शूरव्याजकृतभालवेष्टनाः

सन्त एषा निकृष्टवञ्चुकी सशिष्या सन्यासिन्यपि स्वदुश्चरित-फलमनुभवत्विति यथावृत्तं देवस्मिताकर्तृक खलीकारोदन्तमनिवेद्यैव हे भगवति परमयोगशालिन्यास्ते साहाय्येन मधुरिमातिरेकहृदिस्पृशा देवस्मितासुरतोपभोगेन कृतार्थीभूय स्वदेश प्रतिगच्छामस्त्वमपि हृदयगमनिधुवनमुखिता तामभिनन्दयितु तद्गेह गच्छेति व्याहृत्य तस्यै किञ्चिद् धनमपि दत्त्वा यथागत जग्मु । उत्तरेद्युर्निज कार्यसिद्धिसंभावनाप्रमुदिता लोकोत्तरमायायोगिनी सा योगकरण्डिका देवमितायाः प्रशसावादपुरस्सर पारितोपिकं लब्धुकामा शिष्यया सिद्धिकर्या सार्ध तदीय निवासस्थान प्रययौ । ततो गृहागता शिष्यासहिता तापसी सत्कृत्य कृत्रिमस्मितिविकस्वरानना चरित्रकवचा साध्वी सा देवस्मिता प्रबलधत्तूरकचूर्णोपेतं मधुरं मधु पाययित्वा मद्यवेगापहृतचेतनयोस्तयोर्नासिकाकर्णश्छुरिकया परिच्छिद्य ते कुस्त्रियौ पुरीपकर्दमाधाने परिजनेन प्राचिक्षिपत् तदनु चैतेऽस्मत्खलीकारविमनीकृता सारमयेचरणाङ्किताखिका दुर्दशापन्ना वणिग्युवान उन्मत्तश्वान इव निजजनपदमागत्य मा जातु भर्त्रे गुहसेनायाभिद्रुह्येयुरिति मनसि विधाय कटाहद्वीपगमने कृतनिश्चया सती श्वश्र्वै यथासवृत्ता तामेव वार्ता सविस्तरं न्यवीविदत् । उपश्रुत्य चमत्कारात्मिका रोमहर्षणी सतीसद्वृत्तिशंसिनीमतिप्रशसनीया वार्तामयि वत्से साधु साधु, भर्तृवत्सलया त्वया शीलसंरक्षण सुष्ठु विहित परन्तु मे पुत्रकस्य ते प्राणसमस्याकल्याण नून समुत्पद्येत किमत्र कर्तव्यमिति श्वश्रवा

सप्रश्रयं सोत्सुकं च निगदितवत्यां सा मधूर्देवस्मिता तां भूयोऽप्य-भाषिष्ट मातश्चिन्तात्र न कर्तव्या यथा पुरा शक्तिमती परकलत्रा-भिगमनशीलं जारमपि स्वीयं भर्तारं युक्तितः परितत्रे तथैवाह-मपि करिष्यामि श्रूयतां पतिव्रता साध्वी शक्तिमती कदाचित् परयोषिता पुंश्चल्या सगत सागरदत्तनामानं निजपतिं बद्ध्वा प्राड्विवाकेन निशीथे मणिभद्रयक्षमन्दिरे तया समं निरुद्धं विदित्वा यक्षपूजाव्यपदेशाद् भूरिदक्षिणालाभप्रीणितेन मन्दिरा-धिकारिणा तत्र प्रवेशिता तां पुंश्चली स्वाकल्पेनात्मतुल्यरूपां कृत्वा निर्गमयामास ततश्च प्रातस्तेनैव प्राड्विवाकेन व्यवहारासनमानी-तौ दम्पती दृष्ट्वा मृषा मिथुनमेतन्निगृहीतमिति संजातरोषो मही-पालस्तौ विमोच्य तं प्राड्विवाकं निजग्राहैवं सा बुद्धिबलेन पर-योषितो जारमपि स्वं पतिं ररक्ष किल किं पुनर्मदेकपरायणं दयितदयितं भर्तारमहमपि प्रज्ञाबलेन परित्रास्ये ध्रुवमिति व्याहृत्य ततः सज्जीकृताध्वसंभारा धृतसायात्रिकवेषा पुरुषवेषधारिणा परिजनेन साकं प्रवहणेन कटाहद्वीपं प्रति प्रतस्थे कालेन च तत्रा-साद्य वणिग्व्यवहारसभामध्येऽक्षतशरीरमात्मनः प्राणेभ्योऽपि प्रेयांसं सर्वेभ्यो लोकेभ्योऽपि गरीयांसं चिरविरहितं शांभवकोकनदपाणि भर्तारं गुहसेनं सस्पृहं दृष्ट्वा तद्दर्शनप्राज्यसुधाधारासंसिक्ता रोमा-ञ्चितविग्रहा सती तत्रत्यं राजानं द्रष्टुं ययौ । क्षणेऽस्मिन् सोऽपि पद्महस्तो गुहसेन आरात् पुरुषरूपधारिणीं तां यदृच्छयावलोक्य प्रीतिस्मेराक्षः सन् पीयूषनिर्झरोक्षित इवातिप्रमुदितमना व्यचो-

चरन्ममान्तरात्मानमतिवेलं प्रह्लादयन्नग्रे दृश्यमान. कोऽयं स्यादिति। सापि मनस्विनी देवस्मिता राजानमभ्युपेत्य राजन् बालस्त्रीजनवर्जं सर्वे नागरिका सर्वास्थानमण्डपे समाहूयन्तां यथा किमप्यत्यावश्यकं विज्ञाप्यं मेऽस्तीति प्रश्रयणपूर्वमभ्यर्थयाञ्चक्रे ततश्च निःशेषपौरेषु तत्र समुपस्थितेषु किं ते विज्ञाप्यमस्तीति भूभुजा सकौतुकं पृष्टे देव ये मे चत्वारो दासास्ताम्रलिप्तानगरात् पलायिता इह तिष्ठन्ति तानायुष्मान् देवो मे प्रतिददात्विति विज्ञप्तिं चक्रे। सौम्य पश्य यर्हि समस्तपौरा समूयात्र समुपस्थितास्तर्हि तास्त्वदीयान् दासान् प्रत्यभिज्ञाय यथेप्सितं गृह्णीष्वेति तत्रत्येन वसुधाधिपेन समादिष्टा पुंवेषा साध्वी सा देवस्मिता सभामध्यस्थाञ्शारदीय–बलाहकपाण्डुरोष्णीषपट्टनिगूहितललाटतटान् खलीकृतपूर्वांश्चतुरस्तरुणान् प्रत्यभिज्ञाय राजन्निमे मे दासा इति निगद्य च जग्राह। तत्क्षणात् खपुष्पोपमं काकतालीयं व्यतिकरं प्रत्यक्षीकृत्य विस्मयरोषाविष्टमानसास्तत्रत्या. सर्वे सभासद उच्चैराचुक्रुशुर्भो राजन् कुत शशशृङ्गमय धनुरुपलभ्यते कथ बन्ध्यासुत. संभवति कथं पुनरेते वणिक्सुताश्चत्वारो वैश्यजातीया परवशवदा दासा भवन्तीति। यूय सर्वे मम वचन न श्रद्दध्वे चेत् तर्हि ज्वलनतप्तेन लोहमयेन कौलेयकपादेन मया कृतलाञ्छनान्येतेषा चतुर्णामलिकानि सपरीक्षध्वमिति वणिग्रूपधारिण्या तयोक्ते ते पारिषदास्तेषामनिच्छतामपि यूना शीर्षवेष्टनानि बलात्कारेणापनीय भालेषु शाश्वती. समाः स्थायीनि सारमेयप-

दानि प्रेक्षाञ्चक्रिरे । अथ कौतूहलाकुलेषु निखिलेषु सभासत्सु विचित्रं विचित्रमेतदिति सविस्मयमुच्चारयत्सु चमत्कारिप्रेक्षणक-दर्शनविस्मितो भूभर्तापि किमेतदचिन्त्यं सजातमङ्ग यथावस्तु सर्वमामूलात् कथ्यतामिति पुरुषवेषां तां समादिदेश। सर्वास्थान-मण्डपगतेषु तेषु सर्वेषु पौरेषु सावधानं कौतुकाच्छृण्वत्सु शश्व-दम्लान रक्ताम्बुज हस्ते धृत्वा सा चारित्रकवचरक्षितशीला भर्त्रेकपरायणा मत्तकाशिनी देवस्मिता चन्द्रमौलिविश्राणितकमल-वृत्तान्तादारभ्य यथावृत्त सर्वं विस्तरश उपवर्णयामास तदनु च तत्र सहसा समुत्थिता उद्दामा अट्टहासध्वनयः समग्र दिगन्तराल बधिरी-चक्रुः। काममोहिता एतेऽविवेकिनश्चत्वारो नराधमा न्यायतोऽद्य-प्रभृति त्वदधीना दास्ये तिष्ठन्त्विति निग्रहदण्डे दण्डनीतिप्रयोक्त्रा नृपेण निपातिते ततो दण्डवत् साष्टाङ्गप्रणामं कृत्वा तेषां बान्धवा अदभ्र हिरण्य तस्यै समर्प्य तांश्चतुरो वणिक्कीटान् दास्याद्वि-मोचयाम्बभूवु । तत. ससाधुवादप्रशसामुखरैः क्ष्माभृत्पुरस्सरैस्त-त्रत्यपौरजानपदैः सर्वं सुतरा संमानिता साध्वीना पुरोगामिनी देवस्मिता परमार्थतोऽकाण्डोपनतप्रियजायामागमरोमाञ्चितव-पुषा निर्विघ्नवाणिज्याधिगतपुष्कलफलोदयेन करधृताम्लानशाम्भव-कोकनदशसितनिष्कल्मिषशीलेन जीवितसमेन भर्त्रा गुहसेनेन संगता तत्र कतिपयदिवसानि यथासुखमुषित्वा तेन सह हृदयपरितोषण-परम्परविरहविरहितमदातनगृहवासपरमसुखोपभोगाय ताम्रलिप्तां प्रतीयाय। इति चेतोविस्मापनकथाकथनविचक्षणेन नर्मसचिवेन

वसन्तकेन कथिता सदाचारशीलोपदेशगर्भामनल्पाश्चर्यरसप्रस्रविणी सुचरित्राकथा समुपजोपमाकर्ण्य हृष्टमानसा राजपुत्री वासवदत्तापि देवस्मिता भर्तरीव वत्सभूमण्डलाधीश्वरे गाढबद्धानुरागद्विगुणीकृता शाश्वती भक्ति बबन्ध। अत्रान्तरेऽवन्तीश्वरवाचिकहर. प्रतीहारो विन्ध्याद्रिदुर्गस्थ त वत्साधीश्वरमुदयनमभ्युपेत्य सादरकृतप्रणति. कुशलप्रश्नपूर्व तमभिदधे महाराजश्चण्डमहासेन समादिशति यत् त्वमस्मद्दुहितर प्रच्छन्नमपहृतवास्तत् समजसमित्यनुमन्यामहे केवल तस्या कृते पूर्व विन्ध्याटवीतो मायादन्तावलप्रयोगेन विलोभ्य त्वा जीवग्राह गृहीत्वोज्जयिनीमनीनयमिति ते विदितमस्तु किञ्च यदि वय बन्दिने ते वासवदत्ता स्वयमदास्यामहि तर्ह्यस्मासु ते प्रणयो नूनं न समजनिष्यतेति सदिग्धमतिभिरस्माभिस्तदानी सा न दत्तेदानी तु मिथ सजातगाढस्नेहपाशसंदानितहृदययोर्युवयो. सर्वलोकसमतविधिवत्पाणिग्रहणमहामहं निर्वर्तयितुमस्मदीयो ज्येष्ठतनूजो गोपालको वैवाहिकोपायनसामग्रीमादाय युष्मदन्तिक प्राप्स्यतीति तदनन्तर च प्रतीहारो वासवदत्ता सादर प्रणम्योवाद राजपुत्रि त्वज्जननी महादेव्यङ्गारवतीत्थ संदिशति वत्सावत्सलायै मह्यमप्यनिवेद्यैव रह प्रणयिनोदयनेन सह पलायिना त्वा ज्ञात्वा हृदय मे विपादेनेदानीमपि विदेदीर्यते वात्सल्यार्द्रार्द्रमानसा त्वत्प्रसू मामपि निरनुक्रोशेव परित्यज्य किं न लज्जसेऽयि वत्से सुचिरमुदयनस्य भार्यात्वे कल्पिता त्व तेनैव समं निष्क्रान्तेति किञ्चित् समाश्वासमनुभवामि यतो हि तव

पूर्वजो गोपालक. पितुरादेशात् त्वद्विवाहविधिमचिरेण निष्पादयिष्यति ततो मे मनीषिते जामातरि ते भर्तर्यविकलभक्तिप्रणयैकतान मनो वद्ध्वा तेन सार्धं शश्वत् सहवाससौख्यानि निर्विश्या. पुनस्त्वत्कल्याणैषिणी मा बन्धुसुहृज्जनान्वितामिहस्था कदाचित् कदाचिदनुस्मरेति । एवकार श्वशुरेण चण्डमहासेनेन संदिष्टत्वात् प्रमोदातिभूमि गत उदयनो निजपुरी कौशाम्बी प्रतियियासुरचिरेणेहागमिष्यता मम श्यालेन गोपालकेन सह कौशाम्बीमागच्छतमिति सुहृद्वरेण्य पुलिन्दकं श्वशुरप्रतीहारं चाभिधायोत्तरेद्युर्दर्शितोदयनानुरागयिव मनोभिरामारुणिमरोचिष्णुकिरणसंचये जगत्साक्षिणि सप्ताश्वेऽरुणसारथावुदयशिखरिशिखरं परिचुम्बति मातृसदेशश्रवणलज्जिता प्रणयिनी वासवदत्तामादाय पुरत. सेनान्या रुमण्वता नेनीयमानैश्चतुरङ्गवलै. परिवारितोऽजस्रप्रस्रवद्दानतोयाकृष्टमदमत्तभ्रमरकदम्बकदुर्दिनायमानाननाना प्रणयोद्रेकादनुगच्छता सजीवाना विन्ध्यपर्वतशिखराणामिव सांपरायिकगजेन्द्रयूथाना वधिरितसकलककुभिर्जलदसमयवारिवाहगर्जितोपमैरुद्दामजयकोलाहलैरिवोच्चैस्तमबृंहणै. सहर्ष प्रतोष्ट्यमान इव तीक्ष्णखुरक्षेपसहस्रयाविदारितक्षितितलानामतिवल्गु जवाद् वल्गतां जवनाश्वीयानामुत्कटह्लेषाभि· सानन्दाभिनन्दितप्रियासमागम इवाभ्र लिहभूधरसमवायसकाशैरतिभृश पांसुलान्महीतलात् समुत्पतद्भिर्नीरन्ध्रवरूथिनीधूलिपटलैरकालोपनतवर्षासमयशङ्का सजनयन् दीर्घकालविरहितनिजपत्तनपुनर्दर्शनोन्मुख. सन् प्रस्थान चक्रे ।

ततः कतिपयैर्दिवसैर्निजविषयप्रान्तं प्राप्य रुमण्वन्निशान्ते कृतैक-रात्रविश्रान्तिवासवदत्तासख उदयनोऽपरेद्युरुत्तोरणवैजयन्तिकाशतसहस्रसमाकुलां प्रत्यग्रोपलब्धराजलक्ष्मीनीकाशदयितासमुपेत-विभुप्रतिनिवर्तनसमाश्वासितसमस्तप्रजागण-प्रारब्धमहोत्सवप्रमु-दितालोकाभिरुचिरां जयशब्दपुरस्सरं सानन्दं प्रनरीनृत्यमानपौर-जानपदसंकुलसंकुलराजमार्गामानन्दमयी कौशाम्बी व्योमस्पृशा मन्दसमीरणतरङ्गितपताकाशुकपुष्पमाला-प्रसाधितानां सुधाधव-लिमापहसिताकाशगगाम्भसा हर्म्याणामुपरिगतानामुल्बणमहोत्स-वाकल्पाभरणपरिभूषितपेशलाकृतीनां लाजान्वितकुसुमाञ्जलीन-नारतमधोऽवकिरन्तीनां प्रहर्षस्मेराननशोभिनीना वधूनां द्युधुनि-रोधोविकसितनीलाम्भोज-विभ्रमशालिभिर्मञ्जुल-मञ्जलैर्लोचनै. पेपीयमान प्रविवेश। तदनु कतिपयेषु वासरेषु व्यतीतेषु चण्ड-महासेनप्रतीहारेण च विन्ध्याटवीराजेन पुलिन्दकेन च साक प्राज्यहिरण्यरत्नगजाश्ववृन्दादिकं वैवाहिकप्राभृतसंभारप्राग्भारं समादाय युवराजो गोपालकः कौशाम्बीपुरी समाययौ ततश्च प्रशस्तेऽहनि लग्नमुहूर्ते तेन सपूर्णविधिपूर्वकं प्रवर्तिते पाणिपीडन-महामहे नानाविधमणिजालकर्बुरितप्रोज्ज्वलवरवेषधरोऽप्रमेया-नन्दसिन्धुनिमग्नो मकरध्वज इवोद्दामप्रीतिप्रोत्फुल्लवदनोऽप्रति-रूपो वत्सेश्वर उदयन· पद्मरागहीरकमणिखचितप्रभास्वरकार्त स्वरतन्तूताप्रपदीनवधूवेषाम्यधिकमनोरमायाः पाणिग्रहीतृकर-सपर्कसंमोदातिशयरोमाञ्चितविग्रहाया परिपूर्णकान्तिपश्चात्कृत-

मन्मथजायाया मालवेन्द्रचण्डमहासेनसुताया वासवदत्ताया नूतनविकस्वरवासन्तीप्रसूनाधिकसुकुमार करकिसलय सानन्द गृहीत्वा तया सम सप्तपदी चकार। अथैव विधिवन्निर्व्यूढे परिणयविधौ क्ष्माभृदुदयन. पट्टबन्धनभूरिप्रत्युपहारवितरणपूर्वकेण सपर्याविधिना सान्द्रसौहार्दनिधि:, श्याल:, गोपालकमूर्जस्विनं सखाय पुलिन्दक च यथायथं स्वय सभाजयित्वा करदीभूतानां सामन्तनृपाणा पौरजानपदानां च यथोचितसत्क्रियाविधौ तौ मुख्यमन्त्रिसेनान्यौ यौगन्धरायणरुमण्वन्तौ नियुयुजे। सततप्रभविष्णुसमादेशविधेयोऽपि सख्यातिगप्राघूर्णिकसमुदायसंमाननकर्मनियुक्त. सन् मन्त्रिमुख्यो यौगन्धरायण: सहाय वाहिनीपतिं रुमण्वन्तमेवमभ्यवादीदहो सखे दुर्वहराज्यधूर्वहनादपि गरीयसि दुष्करे कार्ये प्रभुणेदानी नियुक्ता आवामेतस्मिन् विवाहमहोत्सवप्रसङ्गेऽत्र समवेत बहुविधचित्तवृत्तियुजमतिथिसमूहं सर्वात्मना भोजनादिसत्कारैर्मनोऽनुकूलतां प्रापयितुं कथं शक्नुयाव यथा लोकचित्तवृत्तिरतीव दुरवबोधा दुराराध्या खलु बोभवीति हि सखे सम्यगसंतोषितो डिम्भकोऽपि मनसि मन्युं भजेत विद्यतेऽत्र निदर्शनं श्रूयतां पुरा बभूव किल देवसेनसंज्ञकेऽग्रहारे रुद्रशर्माभिध. कोऽपि द्विजातिस्तस्य च बभूवतुर्द्वे भार्ये तयोरेका पुत्रमेक जनयित्वा दिष्टान्तमुपजगाम स शिशुं विनष्टकनामान परिपोषणार्थमपरस्या पुत्रिण्या जायाया हस्ते स रुद्रशर्मा प्रिये मातृविहीनं स्वत्प्रसूतपुत्रसमानमिमं मे नन्दन सस्नेहं परिपोषयेत्युक्त्वा समर्पयामास सा तूदरंभरि: स्वौर-

सोदरपोषणतत्परा निस्त्रिंशहृदया विमाता त डिम्भकमपथ्यभोजनदानेन परिकर्शयाम्बभूव तं च दुर्बल परिक्लिशमस्वास्थ्यपाण्डुराङ्गं पिचण्डिलमात्मजमवलोक्यातिभृशं दु खित. स रुद्रशर्मा तां सखेदमनिन्दीज्जनयित्रीविहीनत्वात् स्वीयपुत्रापेक्षया समधिकानुकम्पार्हमपि मम पुत्रकं कस्मात् त्वमीदृशी दुरवस्थामजीगम इति सापि मृषावादिनी वितथमभ्यधादनिशमतन्द्रितया मया दुग्धघृतौदनादिभि. पथ्यैरशनै. स्वकीयतनूज इव परिपोष्यमाणोऽप्ययं बालक: स्वभावत ईदृगवस्थः संवृत्तो नात्र मेऽपराधगन्ध इति तच्छ्रुत्वैव मे पुत्रक. प्रकृतिकृशतनुरिति तदीयालीकवचनविडम्बित सरलाशयः स द्विजोऽमंस्त ननु मधुरिमनिस्यन्दिना विदग्धागनानामनृतवाक्येन को नातिसंधीयते तदानी व्यलीकवादिन्या कुटिलस्वभावायास्तस्या विमातु. सूनृतविपरीत वाक्यमाकर्ण्यान्तर्ज्वलितामर्षानलो वयसा पञ्चवर्षदेशीयोऽपि बुद्ध्या प्रौढसमोऽसौ बालविनष्टको यथा कदर्या विमाता मां सतत पीडयति तथाहमपि केनाप्युपायेन तस्याः प्रतीकारं विधास्यामीत्यध्यवस्य राजभवनात् प्रतिनिवृत्तं जनकं तात द्वितीय: पितापि मेऽस्तीतीपदविस्पष्टमभ्यभाषिष्टैवमहर्दिवि वारवारं बालके तस्मिन् वदति सोऽपि सजातेर्ष्यामर्षः सभ्रूभंगमुखो रुद्रशर्मा ता भार्या कुशीला पांसुला सदिह्य सर्वथा परिहरणीयं किल्बिषमिव न केवल तस्याः शरीरसपर्क दर्शनमपि व्यवीवृजदेवं गते परिखिन्ना सा विमाता सुतरा दुर्मनायमाना कथं

नाम भर्ता मेऽनपराधायै कालमियन्त चोग्रुधीति ध्रुवं मया कर्दर्थितेन मृतमपत्नीपुत्रहृतकेत किमप्यनभीप्टमनुष्ठितं स्यादिति चेतस्यवधार्य कृत्रिमवात्सल्यव्यञ्जनेन क्षीरसर्पिःशर्करासुसंस्कृतं स्वादु मिष्टान्नं तं भोजयित्वा सगौरवं तं क्रोडीकृत्य च कपोले परिचुम्बन्ती सानुनयमप्राक्षीद्धे वत्स मदीयपुत्रादपि गरीयास्त्वमसि मेऽप्रतिमस्नेहास्पदं तथापि कच्चित् त्वं पितृपादान् ममोपरि निष्कारणमेव प्राचूकुप इति तस्या भणितं निशम्य स डिम्भस्तां प्रत्यवादीदथ किं हे विमातरतोऽप्यधिकाधिकं विप्रियं ते करिष्यामि यदीत्थं मा व्यथयितुं कुस्त्री त्वं निर्बध्नासि कमर्थमपेक्ष्य निजयोनिजपोषणलालनैकतानमानसा निर्दया त्वं मामपमृत्युं प्रापयितुं मह्यं कृपणाय सततं दोग्धोक्षीति बालकवचनश्रवणोत्थपश्चात्तापपरितापिता सा सहसोद्गतबाष्पबिन्दुक्लिन्नाक्षी बद्धाञ्जलिः प्रणम्य तं शिशुं शपथपूर्वकमेवं प्रत्यवोचद् मां मर्षय मर्षय न भूयस्ते द्रोहिष्यामि निर्घृणाया मे पापिष्ठ दौश्चर्यं क्षमस्व श्रुत्वा च विमातृनिगदितं स बालाको विनष्टकः सहर्षं व्याहार्षीद् विप्रतीसारस्त्वया हृदये याथातथ्येन संश्रयत्यनुभूयते चेत् तर्हि त्वदर्थं जनकचरणानां कोपाग्निं सपदि निर्वापयिष्यामीत्युक्त्वा राजकुलात् प्रत्यागताय पित्रे मुकुरं दर्शयित्वा च तत्रैव प्रतिबिम्बितं तं निर्दिशन्नेष मे द्वितीयो जनकोऽयं द्वितीयो जनक इत्यभीक्ष्णं तमभिदधे सोऽपि रुद्रशर्मा स्निग्धबालकस्य मुग्धवचसा

युगपदुत्पन्नविश्वासः प्रसन्नधीरकारणपरिहृता ता स्वीयां भार्या-मनुकूलयति स्म ततश्च कालेन निजसुत इव तथा पथ्याशनैः प्रीतिपूर्वं सौहार्दात् परिपोष्यमाणोऽसौ बालविनष्टक. स्वस्थी-भूय पितृनयने नन्दयन् वैमात्रेयेण सम शुक्लपाक्षश्चन्द्रमा इव शनै' शनैः प्रववृधे हे सखे रुमण्वञ्शिशुरपि विप्रकृत कुप्यति तस्माद्धेतोरत्र समिलित सपौरलोक राजक यथाशक्ति प्रीणोयाव। इति समुदोर्य विशालधोर्यौगन्धरायणो रुमण्वता सह नस्मिन्नुद-यनवासवदत्तापरिणयावसरे प्रशस्तभोजनशयनार्पण।दिकैर्हृदय-ग्राहिभिर्निर्दोषैरुपचर्यासत्कारविधिभिरशेष राजक प्रजासमुदाय च प्रकामं पिप्राय येनैतौ मन्त्रिसेनापती मदेकपूजापरायणौ भवत इति सम्मानविशेषहृषित' सर्वोऽपि जन समुपजोप मेने। अथ सम्यग्निर्वर्वर्तितोपयमोत्सवो नवोढया वासवदत्तया सार्धं निर्वृति-कोटिमध्यारूढो महीक्षिदुदयन मनतोपकारिणो निजहितैषि-णस्त्रीन् सखीन् मुख्यामात्य यौगन्धरायण [illegible] [illegible] नर्मसचिव वसन्तक च प्राज्यकोशेयहिरण्य[illegible] [illegible]मानि-सर्जनेन यथास्व समानयामास। ततो निर्विघ्नशुभ[illegible]रोद्ध हर्म-विधातरि श्याले गोपालके निजपितृनियोग ममञ्जमम[illegible]ष्ठाय सकलेन कृतज्ञेन राजकुलेन सपूजित उज्जयिनापुटभेदनाभिमुख प्रस्थिते नवपरिणयमुखिनोऽतिशयमधुरप्रेमरसनिर्भरनववधूवदन-हेमाम्भोजमधुपानासक्तभ्रमरो हृदयगमकटाक्षविभ्रमपेशलाया अक्षय्यरतिसर्वस्वभूताया सर्वाकाराभिरुचिरसुरतसुधाधारानिर्भ-

रिण्यास्तस्या वरवर्णिन्या वासवदत्ताया मीनकेतनाभिषेककनक-कलशायमानातिस्पृहणीयपीनवक्षोरुहस्थले सुललितशृङ्गारकेलि-निरतमनसिजलीलोपवनप्रतीकाशे प्रकामतो विहरन् वत्सराज उदयनस्तया सत्रा मन्मथसाम्राज्यनिर्वृतिं यथातृप्ति समुपबुभुजे ।



# (९) पद्मावतीविवाहकथा

एवं कृताभीष्टदारपरिग्रहेऽनिशमनन्ततृष्णामूलकसुरतसभोगमद्यपानमृगयादिदुर्निग्रहव्यसनप्रसक्तचेतसि व्यसनिन्युदयने नि शेषप्रजागणयोगक्षेमजनपदसपदावहेपु कुलक्रमागतराज्यकार्येष्वपि पराङ्मुखीभूय केवलमिन्द्रियार्थनिषेवणार्थमेव विहरति सति सेनान्या रुमण्वता सह दुर्वहा महती राज्यधुरमुद्वहन् मन्त्रिपुगवो दूरदर्शी यौगन्धरायणस्तं सहाय निजावसथे निमन्त्र्य सविमर्शमवोचद यदप्रतिमपराक्रमविस्मापितपिनाकिन शत्रुणामजय्यस्य सततजिष्णो. कृष्णसारथे सर्वलोकसंपूजितमहिम्नि प्रशस्तान्ववायेऽभिजातोऽमृतदीधितिवशललामभूतोऽपि सर्वंकषेण मकरध्वजेन प्रसह्य पराभूतत्वादजिगीपुरस्मत्प्रभुर्गजसाह्वयमहापुरीसमुपेता पितृपैतामही मही महीयसीमविजिगीपया परित्यज्य वत्सभूमण्डलावशेप. सवृत्त इदानीमपि बलवद्विपयप्रसङ्गमुपितधिपणो राष्ट्रनियोगनिर्वाहणविमुखो निश्चिन्त आस्ते सखे यद्यत्र प्राप्तकाला प्रतिक्रिया न विधीयेत सौदामनीवच्चचला पतयालु राजलक्ष्मीर्ध्रुव निपतेत् तस्माद्धेतोरस्माभी राज्यभारधुरीणै: प्रज्ञानैपुण्यप्रयोगात् तथैव कर्तव्य यथासौ पुन कुलक्रमागता समस्तवसुधरां हस्ते करिष्यति प्रज्ञाबलेन किमसाध्य भवेदिह लोकेऽत्र

निदर्शनरूपमनुपाख्यानं कथयामि ते पुरा बभूव किल कश्चित् क्ष्मामण्डले महासेनो नाम कोऽपि मनस्वी वसुधाधिपो यो जातु बलोत्कटेनामित्रेण संग्रामाजिरे पराजितः शत्रुपरिभवोत्थोद्दाम-मन्युज्वलनपरितातप्यमानो दुश्चिकित्स्यं गुल्मरोगं लेभे तं च भैषज्यासाध्यव्याधिपेपीड्यमानं वीतच्छायं मृतप्रायं सपरीक्ष्य मतिमता वरोऽगदङ्कारवरेण्यः परहितो नाम हा राजन् त्वदीया हृदयैकवल्लभा महिषी सद्यो दिष्टान्तमुपगतेति सशोकमिव मृषा प्रोवाच तच्च निशम्याकाण्डोपनतकुलिशनिर्घातकल्पं प्रियभार्या-मरणजविषादावेगाद् युगपत् क्षितितले निःसंज्ञं निपततस्तस्य राज्ञः कुक्षिस्थ गुल्मबन्धनमतर्कितनिपतनवेगेन स्वयं प्रपुस्फोट ततः स क्षितिक्षित् स्वस्थीभूय स्वदयितया समं ररम्यमाणः काल-क्रमानुसारेण विद्वेषिणमभिभूय पुनरवाप्तराज्यसपत्नमृद्धस्तास्ता-नैहलौकिकसभोगान् प्रकाममुपबुभुजे तद्व भिषग्वर इव वयमपि विभुहिताय तदीयकुलपरंपरागतां विपुलामवनिं पुनःसाधयितुं प्रयतिष्यामहेऽस्मदीयप्रभुदिग्विजयार्थदण्डयात्रायां तु केवलमेक एव प्रत्यर्थी पार्ष्णिग्राहो मगधमहीमण्डलाधिनाथः प्रद्योतो वरीवर्ति यो नूनं पृष्ठतोऽस्मान् कदर्थयिष्यति कथमपि युक्तितोऽनेन सन्धि-सम्बन्धे कृतेऽसौ महीपालः पार्ष्णिग्रहणं न करिष्यति तदर्थं मया प्राग् वत्सराजाय कन्यारत्नं पद्मावतीं देहीति याचितोऽपि स क्ष्माभृद् वासवदत्तायां दृढबद्धानुरागायोदयनाय मदीयस्नेहभाजन-मात्मप्राणसमां पुत्रीमर्पयितुं नोत्सहे इत्युक्त्वा प्रत्याख्यातवान्

तस्मात् कारणात् कुत्रचिदपि प्रच्छन्नस्थाने देवी वासवदत्तामुपाशु निधाय तया शून्यीकृत वासगृहमग्निसात् कृत्वा दैवहतकेन जातवेदसादाहीति सर्वत्र समुद्घोपिष्यामस्ततो वासवदत्तादाहकिंवदन्त्यां ग्रैष्मिकदवाग्नाविव विश्वतो वितेस्तीर्यमाणाया भूयोऽस्माभिरभ्यर्थितो मगधाधीश प्रद्योतो वत्सेशेन पद्मावत्या पाणिमसगय ग्राहयिष्यतीत्थ लब्धमगधराजसाहाय्या वीतज्वरा वय पूर्व पौरंदरी ककुभमात्मसात्कर्तुं विजययात्रा विधास्याम.। इत्येवं सचिवमुख्येन निगदित वच. समाकर्ण्य निर्विचारसाहसाशङ्काविष्टमानसो विमृश्यकारी वाहिनीपती रुमण्वांस्त प्रत्यभ्यभाषिष्ट यद्यपि त्वदीयां प्रभुभक्ति निर्ममा बहु मन्येऽह तथापि नैतद् युज्यते त्वया चिकीर्पितमेतदसमञ्जस क्रियेत चेत्तर्हि नि सदेहमेतदनिष्टमत्याहितमावहेत् कथ नु खलु राज्ञ्यामतिगाढानुरक्तो नरेन्द्र उदयनस्तद्विनाशवार्तामचिन्तितनाशनिप्रहारसंकाशां सहेत हे वयस्य तद्वार्ताश्रवणमात्रेणैव स्फुटितहृदयो जीवितसशये पतिष्यति किं न त्वया विचारित यत् परस्परानुरागातिरेकसुदृढसंदानितहृदययोर्दम्पत्यो कादाचित्कोऽपि विश्लेपोऽतिदुस्सहसतापावह प्राणसदेहाय भवतीति श्रूयता मयापि कथयिष्यमाणा कथामिमा पुरा मथुराया प्रेमैकपात्रीभूतया प्रियतमया जायया साकं यथासुखमुवास वहिल्लकाभिधस्तरुणवणिग् य कदाचिद् रत्नवाणिज्यार्थ विदूरभूभागवर्ति देशान्तरं प्रति प्रस्थातु व्यवसितमनास्त्वया जीवितनाथेन सार्धमहमपि गच्छामीति बाष्पप्रवाहसरुद्धकण्ठगद्गद कथचित्

कथंचिद् भाषमाणां भुजवल्लरीभ्यां कण्ठे लग्नां प्राणसमां कृच्छ्रात् सानुनयं विमुच्य यावत् प्रयाणमार्गे पदं चक्रे तावद्बाह्यद्वारकपाटाश्रितपृष्ठभागा साश्रुनयना प्रयान्तं भर्तारं सविषादं दर्शं दर्शं निःशब्द रुदन्ती दृग्गोचरात् तिरोहिते तस्मिन् सा दयितामुसमा नरकयातनाप्रतीकाशपतिविप्रयोगासहिष्णुः सहसा धरणितले निपत्य हन्त समुत्क्रान्तासुः संववृते तत्क्षणात् सोऽपि मनसि समुद्भूताकल्याणविभावनाचरीकृष्यमाणः प्रतिनिवृत्य विष्णुपदादकाण्डे भूमितले परिभ्रष्टामैन्दवीं श्रियमिव शुभ्रतुषारसवर्णां व्यपेतप्राणवायुं प्रेयसीं ददर्श दृष्ट्वा च तां क्रोडीकृत्य प्रियतमेऽहह कथं त्ववस्थायामीदृश्यां पतितासि देहि मे प्रतिवचनामृतमिति प्रमुक्तकण्ठं रोरुद्यमानो मुहूर्तान्तरे शतधा शतधा विशीर्णहृन्मर्मा दुर्भरशोकातिशयेन व्यसुः संबभूवेत्यमसहनीयान्योन्यवियोगानलदन्दह्यमानान्तरात्मानौ तपस्विनौ जायापती जीवलोकं विहाय पञ्चता ययतुरेवं सखे वासन्तीपुष्पसुकुमारहृदयवेधी प्रेमरसनिर्भरान्तरङ्गदाहको विप्रलंभकूपोटयोनि केन सोढुं शक्यते किं पुनरस्मदीयेन महीभुजेति। आकर्ण्य विचारशीलेन रुमण्वतोदाहरणरूपेण कथितं कथानकं धैर्यसागर उत्साहमन्त्रशक्तिसंपन्नो यौगन्धरायणस्तमित्यत्रवीदस्माभिः सविमर्शमनुष्ठास्यमानस्य वत्सराजदिग्विजयहेतुकस्य मुनिर्णीतकूटोपायस्य प्रमादाशङ्का मा स्म कार्षीर्यथा तादृग्भूते कूटोपाये निपुणं विधीयमाने सर्वं समीहितं सेत्स्यति विदाकुरु स्वायत्तसिद्धिः सचिवायत्तसिद्धिरुभयायत्तसिद्धिरचेति राजानस्त्रि-

विधा. सन्ति तत्र सचिवायत्तसिद्धिर्वत्सराजस्तु मतिसचिवानामस्माकं बुद्धिसाहाय्येनैवाभिलषितमर्थमशेषं साधयितुं प्रभवति विनष्टपुंश्चिह्नेषु वर्षधरेष्विव निरुत्साहेष्वस्मास्वकिंचित्करेषु केवलमस्मदधीनेनानेन कोऽर्थोवाप्स्यते नात्र विचिकित्सा कार्या किञ्च सततवत्सराजहितैषी महाराजश्चण्डमहासेनोऽपि देवीं वासवदत्ताप्यस्माभिरचिरेण विधित्सितं देवीदाहोपायं ध्रुवमवज्ञास्यत्यत एव सफलमन्त्रशक्तिप्रोत्साहोद्योगसमन्विता वयं राज्यधुरंधराः प्रभुहितकाम्ययेप्सितार्थसाधनेन सुचिरभुक्तस्य भर्तृपिण्डस्यानृण्यं गच्छामः। मुख्यमन्त्रिणोदीरितं वाक्यं कर्णे कृत्वा समीक्ष्यकारी निर्विघ्नोपायप्रयोगसंदिग्धमतिः सेनानी पुनरेवमवादीद् यद् भवता दीर्घदृष्टिना निर्धारितमेतत् कार्यं यदि निर्विघ्नमप्रमादं च निष्पादयितुं शक्यते तर्हि विभुविभवाभ्युदयाय कल्पते परन्तु प्रमाददोषशङ्किने मे नाभिरोचते यद्यपि पुमान् वाञ्छितार्थसंपादनाय प्रयतते तथापि जातुचिद् दैवं प्रातिकूल्यं कुरुते सखे मनसाभिप्रेतपरललनादर्शनेनाप्यधीरो विमुह्यति किं पुनः स्वजीवितसमावियोगेन नः पार्थिवस्ते कथयामि कथानकमपरं पुरा किल बभूव श्रावस्तीसंज्ञायां महापुरि न्यायमार्गानुसारी दण्डनीतिप्रयोगकुशलोऽपि शिरीषकुसुमकोमलहृदयो बुद्धिमतामग्रिमो देवसेनो नाम वसुधाधिपस्तत्र चोवास कश्चिद् धनधान्यस्फीटभाण्डागारो वाणिज्यकृतमुखः सार्थवाहस्तस्य बभूव तनूद्भवा स्मरस्मेरप्रत्यग्रयौवनारूढा तपोभङ्गकुपितविरूपाक्षतार्तीयीकलोचनाग्निभस्मी-

कुलस्य दुर्ननितम्य कुसुमायुधस्योज्जीवनाय सामरतयुवतिविभ्रम-नारमुद्धृत्य विधात्रा निर्मिता मनोभूसंजीवनौषधीव परिपूर्णरूप-सपत्तिसंपन्ना वरवर्णिनी यदीयलावण्यस्वरूपकान्तिमद्वपुर्दर्शनमात्रेण सर्वो जनो विमूढविवेकः उन्माद्यतीति सकलपुरपोन्मादनी नाम्नो-न्मादनी, अथ जातु तदीयजनकः स वणिग्वरोऽनन्यसदृशी समग्र-लोकलोचनमुपमात्मजा भूभुजेऽनिवेद्य कस्मैचिदपि न दास्याम्य-न्यथा कदाचिदप्यसा अवनीश्वरो मह्यं क्रुध्येदिति विचार्य विचार राजानमभ्युपेत्य विज्ञप्तिं चक्रे राजन्नस्ति सकलजगद्दुर्लभा क्षीर-सागरसमुत्थिता विष्णुवक्षःस्थलविहारिणी मनोहारिणी लक्ष्मीरिव नुरूपा मे पुत्री यद्यस्यामभिरुचिरायुष्मान् देवो विनोदार्थेना परि-गृह्णात्विति समाकर्ण्य तद्वचः सोऽपि महीक्षिदनरपकौतुकाकृष्टमनाः सपदि गत्वा युष्माभिरेतदीया सुता प्रशस्तगुणोपेता न वेति समीक्ष्यतामिति व्याहृत्य लक्षणविदो ब्राह्मणकार्तान्तिकान्स्वदन्तिकं प्राहैषीद् यथा देव आज्ञापयतीति नृपाज्ञा स्वीकृत्य ते मौहूर्तिका वणिग्वेश्म गत्वा तत्रासीनामतिमानुषाकृतिसुपमाशालिनी चेत-उन्मादनीमुन्मादनी साक्षात् कृत्वैकपदेऽनङ्गशराविर्भूतगम्मथमा-मथ्यमानमानसा मूर्च्छितप्रायाः समभूवन् ततश्च प्रयत्नेन प्रकृति प्रतिपद्य यदि क्ष्माभृन्मनोमोहिनीमिमामुपायस्यत तत्तदाहृतचेता रागोद्रेकाद्राज्यतन्त्रमपि चिरभृत्य नचिरादयदपमेव दानंक्षपदिति मिथः संमन्त्र्य राजकुलं प्रत्यागत्य न राजन् सा गोपितुन्मादनी कुशीला दुर्दर्शना पाणिग्रहणायोग्या भवतीति तस्मै मृषा न्यवीविदन्

तद्वचनात्तस्या पराङ्मुखीभूते मेदिनीनाथे ततस्तेनैव व्यापारिणा समर्पिता ता वाहिनीपतिर्यथावत् पर्यणैषीत् ततो गच्छति काले कदाचित् सा सेनानीभार्या सौधपृष्ठगता समीपवर्तिना पथाग्रे प्रचरन्तं दन्तावलाध्यारूढं भूभर्तारमवलोक्य तस्मै निखिललोक-चेतोपहरणक्षममात्मानं साकूतमदीदृशत् तत्क्षणं च सोऽपि पार्थिव-स्तामेव विमानितपूर्वां मदनदमेन रतिजानिना प्रेषितां समग्रपुरुष-जातिवशीकरणयन्त्रपुत्रिकामिव मानसोन्मादयित्रीं हृदयकुमुद-चन्द्रिकां नेत्रमुदं सम्पूर्णलावण्यनिर्झरिणीं वणिक्कन्यामुन्मादनी-मुद्वीक्ष्य युगपदुत्थितमनसिशयजनितदुःसहज्वरवेगपरितप्यमानो-ऽतिभृशमुन्मनायते स्म तदनन्तरं च विदितनिजप्रभुमदनावस्थो-दन्तः सेनापतिस्तादृग्भूतं मन्मथातुरमतिशयसन्तापतनूकृततनुं काश्यपीभर्तारं दृष्ट्वा सुतरां दुःखितस्तमुपाशूवाद देव यथारुचि सोन्मादनी हस्ते क्रियतामिति तद्वचः श्रुत्वा स नृपः सञ्जातकोपः सभ्रूभङ्गं व्याजहार कथं नाम [illegible] धर्मरता सहेलं समुज्झितुमुत्सहे नाहं कथंचिद[illegible]त्र परि-ग्रहीष्यामीति ततः कियति याते काले [illegible]पणेन तीव्रमदनज्वरसन्तापेन प्लुष्यमाणोऽसौ समभूद् [illegible] दग्ध-मीनकेतनमहोपिनाशुशुक्षणिदग्धसर्वाङ्गः कालधर्मं गतः। परलोक-निन्ये सखे पश्य हृदयवल्लभया वामव[illegible] विनाकृता न पार्थिव कीदृगवस्था स्यात्। इत्येनं वाहिनीपतिना [illegible] निगदितं निशम्य धीमान् योगन्धरायणस्तं प्रत्यवोचद् धैर्यनिधयो दुष्कर-

कर्मानुष्ठानात्प्रभूष्णवः सामर्थ्यतितिक्षाप्रोत्साहसम्पन्ना महापुरुषाः समीहितकार्यसिद्धयेऽभिमतबन्धुजनविरहजं हृदयप्रमाथिनमपि परितापं तितिक्षन्ते किं सीताजानिना दाशरथिना शरच्चन्द्रायितानि बहूनि हायनानि दुर्विषहापि दयिताविरहवेदना न तितिक्षाञ्चक्रे किं धृतिसागर उदयनजनकः सहस्रानीकोऽपि क्ष्माभृद्वृषभः शताब्दात्परांश्चतुर्दशसंवत्सरान् सततहृदिस्थया जीवितसमया भार्यया विनाकृतो नरककुण्डायितां विप्रयोगयातनां न चक्षमे यथा-समुदयनोऽपि कान्ताविश्लेषव्यथां कञ्चित् कालं सहिष्यते तथैव करिष्याम इति । श्रुत्वा मतिमतां वरेण मन्त्रिपुरोगेण समुदीरितं वाक्यं पुनरपि परामर्शनशीलः सूक्ष्मदृष्टी रुमण्वान् सविमर्शं समित्यभिव्यभाषे यत् त्वया राज्याभ्युदयनिमित्तं प्रोक्तं तत् सर्वमनुजानामि किन्तु यत् किमपि समीहितार्थसाधनाय नरो विधत्ते तदननुकूलं कृतान्तोऽन्यथा विदधाति येनोक्तं च कविशिरोमणिनापि कृत्स्नमभिन्नमपि न सहते सङ्गमं नो कृतान्त इति हे वयस्य त्वया विधित्सितमिदं कर्म मा नाम काकदन्तगवेषणन्यायेन सपदि त्वनर्थं वा मा खलु जनयेत् तथा समाकर्ण्यतां मया भूयोऽपि कथ्यमानमपरमुपाख्यानमितः उत्तराहि भागीरथीरोधसि कुलम्पितिरस्ति माकन्दिकाभिधं पुटभेदनं तत्र कोऽपि भिक्षोपजीवी वाचंयमः पाराशरी कश्चिद् देवालयमठेऽन्तेवासिभिः कर्मन्दिभिः सह निवसन् वसतिं चक्रेऽथैकदा भिक्षापात्रहस्तो स मौनी महत्तरो भिक्षार्थं कस्यचन व्यवहारकस्य वाणिज्य प्रविश्य भिक्षादानाय

गर्भगृहान्निर्यातां मनोरमाकृतिशोभितामपरां मनोभववल्लभामिव हृदिस्पृशं तस्य दुहितरं विस्फारिताक्षः सन् निरीक्ष्य काममोहितमना सहसा समुज्झितदीर्घकालधृतमौनव्रतो हा कष्टं हा कष्टमहो अब्रह्मण्यमब्रह्मण्यमिति तारं समुदीरयामास तत्समनन्तरं च हा-कष्टशब्दश्रवणविस्मितमानसो गृहस्थः स वणिग् बहिर्निर्गत्य भो भगवन् केन कारणेन युगपच्चिरन्तनीं वाचयमतां परित्यज्य हा-कष्टशब्दमुच्चारितवांस्त्वमिति कौतुकात् तं मौनत्यागनिदानमनुयुयुजे पृष्टेन तेन तापसेन विजने प्रत्यवादि यदियं ते कन्या सुदर्शनापि दुर्भगा कुलक्षयकरी सपुत्रकलत्रं त्वामचिरेणैव निश्चितं विनाशयिष्यति नात्र कोऽपि विचिकित्सागन्धो भवति यथा त्वं मदेकभक्त इति त्वामनुकम्पमानोऽहं याथातथ्यं वदामि तद्रात्रौ यदीच्छसि कुलविनाशभयदामेनां पुत्रीमुपरिभागे निहितप्रदीपायां मञ्जूषायां निक्षिप्य जाह्नवीप्रवाहे परिजहीह्येवं कृते भय-विमुक्तस्य तनयदारसहितस्य ते कल्याणं भविष्यति तच्छ्रुत्वा भीतभीतः स वणिगधमो मनुष्यकीटः कुक्षिंभरिः स्वतनूजां मञ्जूषान्तर्निवेशितां निर्दयं त्रिस्रोतसि संपरितत्याज ततो निशामुखे सुरनिम्नगाकूले शनैः पर्यटन् प्रदीपदर्शितालोकां तामेव भीरुणा सार्थवाहेन परित्यक्तां मञ्जूषामुपलभ्य कश्चिद्राजपुत्रस्तदन्तर्गतां वराकीं चकितचकितहरिणशावाक्षीं सुन्दरीं समुद्धृत्य साश्रुलोचनया तया सगद्गदं निगदितमात्मसंकटवृत्तान्तमनुशुश्रुवाँल्लवण-दयाकोपाविष्टस्तत्रैव मञ्जूषायां दुराराध्यमतिक्रोधालुं वलीमुखं

निधाय सुपिहिता ता गङ्गाजलौघे प्रक्षिप्य च प्रथमदर्शनसंजाता-भिनवप्रेमाकुरामनिशयपेशलाकृति–शोभानिर्जितमनसिशय-वल्लभां श्लाघ्यसौजन्यशीलशालिनीमतर्कितोपनतसुधाधारामिव हृदयह्ला-दिनी नयनानन्दथुदायिनी ता पित्रा भयात् समुज्झिता वरारोहां समादाय सप्रहृष्टचेता स्वभवनमियायात्रान्तरे दुर्दमनकामवशगतः स परमेश्वरविक्रयकोविदो मायावी परिव्राट्पाशो भो यूयं सर्वे-ऽधुनैव त्रिपथगा गत्वा तत्रोत्प्लवमाना प्रदीपप्रकाशिताकृति बृहती दारुमजूषा मङ्क्ष्वत्र समानयतेति निजशिष्यानादिदेश ततश्च समये कियति व्यतिक्रान्ते तैरन्तेवासिभिरानीता ता मजूषामवलोक्य संप्रमोदविकसितस्मेरलोचनयुगलोऽक्षतयोनिकन्याव्यतिक्रमप्रत्याशा-पुलकितवपु. स साधुवादपुरस्सर तान् प्रोवाच साधु साधु संप्रत्य-र्धरात्र सजातस्तन्निद्रासौख्य निर्वेष्टु गच्छत पुनर्मदीयाऽऽशब्दाऽ-श्रुत्वापि यूयमत्र मा स्म प्रविक्षतेति तत्क्षणात् तापसेषु तेषु शयितु निर्यातेषु द्वारि दृढमर्गलं दत्त्वोद्दामरिरसादण्डायमानशिश्नः शिश्नदेवोऽसा अविदारितरतिकुहरकन्यानिधुवनतृष्णाहरिणाक्ष. प्राज्यसुरतलोलुपासृक्कनिर्गलितं लालास्राव परिलेलिहन् वस्त्रम-पनीय सगर्वमिव दर्शितदण्डवदुच्छ्रितमेहनदण्डः सोत्सुक यावन्मजू-षामुद्घाटयति तावल्लोहितवलीवदनमसूचितान्तर्ज्वलितामर्षानितो विकटाकार. शाखामृग उत्प्लुत्य तस्मिन्नेव निमेषे तत्राविद्यमान विवरमपि प्रविविक्षुमतितमा भीतभीत सद्योऽधोमुखीभूतनिर्बल-मेढ्रहतक दिगम्बरं देवदास त मस्करिण मूषकमिव दृष्ट्वा समधिक-

प्रदीप्तकोपधूमकेतु. सन् तूर्णमभिपत्य महापापस्य तस्य कर्णावति-तीक्ष्णैर्नखरैर्दंष्ट्राभिश्च परिच्छिद्य तदनु दीर्घावलम्बितं किमेतदि-त्याशङ्क्येव दीनदीनमनास्वादितकन्यारस तदपि तस्य लिङ्ग समूल समुन्मूलयाम्बभूव तत प्रभाते सर्वमर्त्यलोकानिद्रुप्राय सन्यासिवानरवृत्तान्त विदित्वा तापसशिष्यान्वितस्तत्रत्य सकल-पौरलोक क्वाप्यपसरन्त व्रीडाधोमुख दिशोभाज महादेवनाम-विक्रयनिपुणभिक्षुलिङ्गिनमप्यलिङ्गिन कर्णविहीन त पापिन पृष्ठत. प्रेक्ष्य प्रकाममुपजहास तत पश्चात् तेन मायायोगिना विडम्बितपूर्व स वणिक् स्वात्मजापरित्यागदौश्चर्यविबोधोत्थापि-तविप्रतीसारातिभृशपरितप्तत्वाद् भूरिणा हिरण्यरत्नांशुकादिक-सभृतेनौद्वाहिकप्राभृतसभारेण सम यथाविधि तस्मै राजकुमाराय निजकन्यारत्नस्य पाणि समर्पयाञ्चकारैव सखे विचित्ररूपा नियतिचेष्टा बलीयसी पुरुषकारेण न निवार्यते । आकर्ण्य वाहिनी-पतिवाक्यमद्भुतरसप्रस्रवि प्रबलदैवगतिनिरूपणार्थगर्भित स्मिति-विकस्वराननतामरसो मतिमचिवपुरोगामी धृतिमान् यौगन्धरायण स्मितपूर्व तं सेनान्यमभ्यवादीत् प्राप्तरूप धीमता भवतोक्त तथापि स्थिराचलबुद्धय प्रतिकूलमपि दैवदुर्विपाक सूक्ष्मशेमुषीपुरस्सरेण पौरुषेणैव प्रतिहृत्य दुस्साध्यमप्यभीप्सितकार्य साधयन्ति वर्तते-ऽत्रोदाहरण मयापीदानी कथ्यमान तद् विमृश्यकारिणाप्रतिरथेन भवता श्रूयता यदि श्रवणकौतुक प्रागुज्जयिन्या महापुरि बभूव महातेजा पुण्यकार्मा पुण्यसेन इति सज्ञित. प्रथितयशा भूभुवकुञ्जरो

यो जातु बलीयसा संपूर्णचतुरङ्गसन्नद्धाक्षौहिणीप्रावल्योत्सिक्तेना-काण्डेऽभिषेणयता शत्रुभूपालेन बहुतिथं कालं यथाबलं योयुध्यमानोऽपि हीनचमूबलत्वाच्चरमं सांयुगीनप्रियाप्सरोगणापहृतसंख्यातीतमहायोधसमुदायः सन् पार्वतदुर्गेऽमित्रेण नियतिबलात् प्रतिरुरुधे ततो निजप्रभुभक्तिपरायणा अकुण्ठिताशया. कार्यार्थिसाधनोपायप्रयोगनिष्णातकुशाग्रबुद्धयो राज्यभारधुरधराणामग्रेसरास्तदीयामात्यवरेण्या बलाधिकप्रतिपक्षकर्तृकदुर्गप्रतिरोधभङ्गस्याचिन्त्यत्वात् पुनरसह्यक्षुत्पिपासापरिश्रमार्दितेन दुर्बलेनावशिष्टेन बलेन प्रत्यभिस्कन्दस्याविधेयत्वाच्च प्राप्तकालकूटोपायप्रयोगदत्तमनसोऽहो सर्वेषां तेजस्विनामग्रिमो महाराजाधिराजः पुण्यश्लोकः पुण्यसेनः पराजयशोकाद् दिष्टान्तमुपगत इति दिक्षु सर्वासु किंवदन्ती विस्तृत्य प्रकाशे नृपवेषधारि मृतकलेवरं चितायां प्रदीप्तायामाध्यारोप्य राजानुगुणेन पश्चिमक्रियाविधिना यथावत् संचस्करुस्तदनु ते मतिमतां सत्तमा मन्त्रिपुंगवा राजन् ते सम्यग्विदितमस्तु यदस्माकं विभुरवन्तीश्वरो महाराज पुण्यसेनो विधिहतकेन पञ्चतां नीतस्तद् भुवि यशोमात्रावशेषस्य तस्य सौवर्णसिंहासनमधिरुह्य तर्हि वस्तुतोऽराजवद् राज्यं प्रशाधीति दूतमुखात् तस्मायमित्राय सदेशं प्रजिघ्युस्ततश्च तत्सदेशार्थं सहर्षं प्रतिपद्य मन्त्रिणां कूटोपायवागुरानिपतितः स विपक्षराजः समग्राक्षौहिणीं तत्रैव कटके स्थापयित्वाल्पेन निजशरीररक्षिणाश्वीयेन परिवारितो हयारूढः प्रमोदप्रफुल्लवदनो दुर्गं प्रविश्य तुरङ्गमादवरुह्य

पादचारो सचिवाना मकाशमाययौ तस्मिन्नेव मुहूर्ते पुरुषसिंहास्ते मन्त्रिवरा मसिहनादमभिद्रुत्य तमेकपदे जिह्मुरित्येवमेव प्राशुधिय स्थैर्यनिधयोऽलकर्मीरणा प्रनीपग दैवमविक्लवेन पुरुषकारेण निहत्य काङ्क्षितार्थलाभेनात्मान कृतार्थीकुर्वते तस्माद्भर्तृपिण्डोपजीविनो वयमपि तस्य कृते निविडवद्धकक्षा मन्तो महिषीदाहमिथ्याप्रवादसविधानेन राज्यकार्यमिद मफलीकुर्यामिति । मन्त्रिमुख्यनिगदित तद्वच साकल्येनोपश्रुत्य वाहिनीपतिना रुमण्वतैव व्याहारि यदीत्थकार त्वया व्यवसित तर्हि देव्या बहुमत सोदरं युवराज गोपालकमुज्जयिनीतोऽत्र झटिति समानीय तेन साकं कार्याकार्यविचारोऽनुष्ठीयताम् । तथा करिष्यामीति सेनापतेर्वाक्यमुररीकृत्य सुधीरमात्यपुगवो यौगन्धरायणोऽपरेद्यु कालातिपाताक्षमावश्यककार्यान्तरव्याजाद् गोपालकाह्वानाय सदेशहर तस्मै क्षिप्र प्राहैषीत् ततश्च पञ्चषेषु वासरेषु व्यतिक्रान्तेषु वायुवेगहयारोहे मूर्तिमतीव सप्रमोदे तस्मिन् युवराजे मक्षूपयाते सति हर्षातिशयरोमाञ्चितसर्वाङ्ग सपदि सजातनिर्विघ्नकर्मसिद्धिप्रत्ययद्विगुणीकृतकर्तव्यनिश्चयाचलवदचलाशयो दुस्साध्योपायचतुष्टयषाड्गुण्यप्रजाप्रशमनसन्धिविग्रहचिंतनात्मकराजनीति-समालोचनप्रयोगातिविचक्षणबुद्धिसामर्थ्यशालो स सर्वेषा मन्त्रिणा पुरस्कृतो मन्त्रिमुख्यो नक्त ममस्ताक्षौहिणीनायकेनाप्रतिद्वद्वभुजवलप्रीणितसुरसेनानीषाण्मातुरेण प्रतिभयरणाजिरापराङ्मुखोर्जस्वलपराक्रमशक्तिमता रुमण्वता सह त चण्डमहासेनात्मज निजवासगृहमानीय

राजोचितः श्रयणवग्विस्यापूर्वदेशाातिथिसत्कारेण संपूज्य च मनू सेनान्या संमन्त्रितपूर्वं तत् सकलं तस्मै मानुरोधं न्यवीविदत् । एवकार विदग्धप्रधानमतिमचिवविज्ञप्तं भ्रातृस्नेहभूमे. स्निग्धाया अवरजाया पूर्वं दुर्वहपरिक्लेशावहमपि पश्चाद्धृदयंगमसुखोदर्कं सिसाधयिषितं कार्यार्थं सविमर्शमुपश्रुत्य किंचिद् दुर्मनायमान इव राजपुत्रो गोपालको भो मन्त्रिन् यद्येप ते कर्तव्याध्यवसायोऽनुपसहरणीयस्तर्हि तथा विधीयतां यथा त्वया संविधित्सितं परन्तु गाढानुरक्ता देवी वासवदत्ता दुर्निवारनियतिनियोगादग्निसाद्भूता विदित्वैव नूनं प्राणान् समुज्झिष्यन् वत्सराज उदयन कथंकार समुद्धरणीय इत्यत्र सावधानं विमृश्यतामिति समुदीर्य तेन मुख्यामात्येन नचिरात् प्रयोक्ष्यमाणं कूटोपायमभिमतस्वसृस्नेहाद् वत्सभूभर्तृ हितकाम्यया चान्वज्ञासीत् । तदनन्तरं समीक्ष्यकारिणा मन्त्रिवरेण वाहिनीपतिना रुमण्वतापि सविचारमवाचि य । सुविहिते कर्मण्यपि कदाचित् तत्फलभुजोऽभावाद् विफलीभवति साधितोऽप्यर्थस्तस्मादस्मदीयप्रभुर्यथाशक्ति विनिपातव्यमनात् सुरक्षणीयो येनाभीप्सितार्थप्राप्तिर्नि सदेह सफलीभविष्यति । उपश्रुत्य तद्वचो गुणदोषनिरूपणसमर्थसूक्ष्मदृष्टिनासम्यग्विचारितकार्याकार्यो यौगन्धरायणो भूयोऽप्येव न्यगादीत् कृत सदेहेन नारत्यत्र कश्चिदप्यस्मच्चिकीर्षितकृत्यभङ्गसंशयलेशोऽस्माकं बहुमानपात्रीभूता महिषी वासवदत्ता क्षमाभृत उदयनस्य प्राणेभ्योऽपि प्रेयांसो धर्मदारास्तथा भृत्यानां न. सततपूजार्हस्य युवराजगोपाल

कस्य वात्सल्यभूमि कनीयसी सोदरा तथापि यादृच्छिकेन जात-वेदसा दग्धा स्वीयां स्वसारं ज्ञात्वापि नानुशोचन्त श्यालं गोपालकं दृष्ट्वा नूनं सदिग्धमनिरुदयनं किं नु मदीयप्राणसमा म्रियेतेत्याशङ्क्य पुनरस्माभिः समाश्वास्यमानः कथञ्चिद् धृतिमाश्र-यिष्यत्येव गते पुनर्याचितो मगधेश्वरः प्रद्योतस्तस्मा उदयनाय भार्याविहीनाय स्वां दुहितरं पद्मावतीमसंशयं दास्यत्येव ततो वत्सराजमागधराजपुत्रीपरिणये संवृत्ते वयं वासवदत्ता पुनः प्रादुर्भावयिष्यामः सम्प्रति तु वासवदत्ताद्वितीयमजस्रमृगयाप्रमत्त-मुदयनं विषयप्रान्तवर्तिनी मगधजनपदसन्निकर्षस्था लावाणकाभिधा मृगव्यविहारभूमिं निपुणेन यथाशीघ्रं नीत्वा तत्र देवीवास-गृहमग्निसात्कुर्महि ततो युक्तितो वासवदत्ता प्रच्छन्नरूपा पद्मा-वतीभवने निदध्महे एवं कृते तयोरपि परस्परपरिचयप्रणयौ सञ्जनिष्येते ध्रुवमिति। तस्यामेव निशीथिन्यामेवंविधं मिथः-समन्त्रणमनुष्ठायोत्तरेद्युः पूर्वाह्णे राजकुलं प्रविश्य ते त्रयो राज्य-धूर्धरा सर्वास्थानमण्डपस्थं राजानं प्रणम्य रुमण्वन्मुखेन व्यजिज्ञपन् राजन्नस्ति प्रकृतिसुषमामनोभिरामो नानाविचित्र-विहङ्गश्वापदकुलसङ्कुलः श्रुतिसुभगकोकिलादिपक्षिकूजितापहृत-सत्त्वचेता अपि कण्ठीरवशार्दूलप्रमुखानेकविधचतुष्पाद्बृहगप्रति-शब्दितमनोहरदिगन्तरालः इतस्ततः सङ्कीर्णोपलशकलप्रस्खलद्-गतिमञ्जुलनिर्झरिणीपूरिता नवालमनिलप्रत्यग्रोभूतगुल्मगुच्छ-नीरन्ध्रभूरुहराजिभ्राजिष्णुर्मीनकेतन-विहृति-भूमिरिवाभिरुचिरा-

लोको मगधपर्यन्तदेशोपकण्ठवर्ती लावाणकनामा परिसरविषयो यत्र प्राचुर्येण सन्ति मृगयासमुचितस्थलानि य चैतर्हि दुर्ललित पार्ष्णिग्राही मगधराज प्रद्योत स्वसेना प्रेष्य कदर्थयति तदाखेटार्थ परिपालनार्थं च राज्यकार्यचिन्तनपरिश्रान्तान् कञ्चित् कालं विनोदयितुकामानस्मानादाय देवीसहित आयुष्मान् देवस्तत्र गच्छत्विति। साभितापमाकर्ण्य तद् विलोभनवाक्यमतितमा प्रमुदितमानसो मृगयारसास्वादलोलुपो वत्सराजस्तत्समकालमोमिति व्याहृत्य सपदि सांवत्सरिकमाहूय च लावाणकप्रयाणोचितं शुभयुतिथिमप्राक्षीत् ततश्च तेन निर्दिष्टे शुभशकुनेऽपरेद्युर्मुहूर्ते तत्र प्रस्थाने मनोऽभान्त्सीत्। एवंकारं मृगयाविनोदाय लावाणकप्रयाणे सोत्कण्ठ व्यवसिते नृपादिषु सर्वेषु सभासत्सु तत्र समासीनेष्वकाण्डे स्वीयान्ववायसमुत्पन्नकुलधुरधरोदयनस्नेहेन कुमुदवान्धवोऽमृतदीधितिरिव तमोनुदद्युतिप्रकाशिताशेषककुबन्तरालोऽम्लानदिव्यस्रग्धरो निजवपुष्कान्तिद्विगुणीभूतप्रभास्वरपीताम्बरो गगनेचरो नारदो व्योम्नोऽवतीर्य सर्वेभ्यस्तेभ्योऽस्तनुनेत्रोत्सव ददत् ससम्भ्रममभ्युद्गतेन वत्सेन्द्रेण स्वयमुपहृतभद्रासननिषण्णो यथाविधिसमर्पितातिथिसत्क्रिया-सभाजितः सन् सभातले प्रणिपतिताय तस्मा उदयनाय गम्वदम्लानुपारिजातमाला स्वकण्ठे धृता प्रीतिपूर्वमतिमृज्येति तमभिदभाषे राजन्ननुस्मरामि हन्त त्वा च वासवदत्ता चेदानी प्रत्यक्षीकृत्य वहुभ्यो वहुभ्यो हायनेभ्य प्राक् स्त्रीनिमित्तं भ्रातृभेदमाशङ्किनवता मया त्वदीयेभ्य प्रपितामहेभ्यो

युधिष्ठिरभीमार्जुननकुलसहदेवेभ्यः स्वसखिभ्य कथितां वार्ता वत्सराज तेषा पञ्चाना भ्रातृणामेकैव धर्मपत्नी द्रौपदी नाम समभूद् या परमार्थेन आमीच्चक्षुष्ययाकृत्या सौहार्देन सर्वजनश्लाघ्येनाभिजनेन च तावकीनदयितभार्यासमा भर्तृपरायणा ता तादृग्रूपा दृष्ट्वा तदानीमह चिन्तापूर्वकं तान् भ्रातॄनब्रव भ्रातृस्नेहैकीभूनमतय सततदूरीकृतान्योन्यमत्सरवैरा यूय सर्वे द्रौपदीमूलक परस्परभेद सर्वात्मना सर्वथा मद्वचनान्मिथ प्रणयाच्च निवारयत, सम्शृणुत मया कथ्यमान भ्रातृभेदपिशुनमुपाख्यानं पुरा किल बभूवतुरधृष्यबाहुबलपीडितसमस्तसुरासुरमनुजौ त्रैलोक्यकण्टकौ सुन्दोपसुन्दौ नाम दानवभ्रातरौ तयोर्भुजवीर्येण सुतरा कदर्थितैर्दिविषद्भि सुनासीरप्रमुखै सखेदमभियाचित कमलासनो हिरण्यगर्भ सकललोकचित्तहरिणवागुरा नि.शेषललनाजातिविभ्रमवसतिमिव मनोहरोमप्सरस तिलोत्तमा नाम ससर्ज तदनन्तर च तद्रूपलावण्यविशेपदिदृक्षयेव सोऽपि ह चतुर्मुख किल संववृते ततो जातु मधुरमुधपानमत्तमधुलिट्परभृतपुरस्सरपतङ्गभ्रङ्कारकूजनाभिरुचिरे सद्य पुष्पितवल्लरोपादपकुसुमस्मितिनयनमुपि युवजनमनोह्लादिनि मन्मथसुहृदि मधौ क्रीडोपवने विहरन्ती मददक्षिणसमीरणोच्चालितशुभ्रकौशेयवसनसामिदर्शितचारुरम्भोरूं पर्वतनिनम्बायमानपृथुलजघनभारालसगति पीनस्तनी ता सुरागना दृष्ट्वा सपदि तत्कान्तिमुपितचेतसौ तावसुरसहजौ ममैषा ममैषेति ता जिघृक्ष् युगपन्नखानखि बाहूबाहवि सुघोर नियोयुध्यमानौ

समानबलत्वाच्चरम क्षतिजर्जरितविग्रहौ भयानकविग्रहान्त उभावपि यमसदन जग्मतुरिति हे उदयन शशिकुलावतस ततस्ते धर्मराजादयो महापुरुषास्तव प्रपितामहा. कर्हिचिदप्यविज्ञातपरस्परभेदा मिथ प्रणयादरैकीभूतहृदया. सन्त प्राज्यराज्यसंपद तया द्रुपदात्मजया सार्ध समुपजोष समुपाभुञ्जन् तद्राजन् त्वमपि मन्त्रिणोर्यौगन्धरायणरुमण्वतोर्वचन कात्स्न्र्येन प्रतिपद्येथाश्चेत् कञ्चित् काल कमपि हृदयशोषण पराधिमनुभूय दु खान्ते सुमहती राज्यविभूतिमुपलप्स्यसे ते जीवितसमा सेय वासवदत्ता कालेन सर्वलोकदुर्लभ कुसुमायुधावतार समग्रविद्याधराधिनाथ चक्रवर्तिनं त्वदीय पुत्र प्रसोष्यत इत्युक्त्वा स्मितिविकसितदशनांशुद्योतितसभामण्डप शशिकुलप्रियो नारदः सर्वास्तानापृच्छ्य विष्णुपदमुत्पपात । तत. प्रातरुत्तरेद्यु सज्जीकृतप्रयाणोपस्करसभारो वासवदत्तासखः यौगन्धरायणप्रभृतिभि. कुलक्रमागतैर्मन्त्रिभिः परिवारित ससैन्यो महीभृदुदयनो देवर्षिनारदवाक्याधिकप्रमुदितान्तरात्मा सन् सहर्प प्रयाणमार्गे पद चक्रे ततो वासरै. कतिपयैः परिसरविषय लावाणकमासाद्य तत्र कृतवसतिः प्रत्यह दुर्वारमृगव्यावेशसमाचरीकृष्यमाणान्तरंगोऽधिज्यकार्मुकपाणिर्मनोजवसैन्धवारूढ कृष्णसारकण्ठीरवव्याघ्रादिबहुविधश्वापदयूथसबाध गहनकान्तार परिबम्भ्रम्यमाणो मृगयाविनोदेन नितरा सतुतोप । अत्रान्तरे सहस्रचारचक्षुर्मगधराज प्रद्योत सन्नद्धचतुरङ्गबलमादाय नातिदूरवर्तिन सोमविषय प्राप्तमुदयन विज्ञाय तस्याभिषेण-

नमाशङ्क्य दरत्रस्त मन्त्रिमुर्यौगन्धरायणान्तिक दूत व्यसाक्षीत् तदनु च तत्र समायात तमतिथिसत्कारेणाविकलेनाभिनन्द्य मन्त्रकुशलो दीर्घदर्शी यौगन्धरायणस्तन्मुखादभय तस्मै प्रद्योताय व्यशिश्रणत् । अथैकस्मिन् दिवसे यथापूर्वमाखेटकार्थमुदयने कान्तार याते मिथ समयादमात्यप्रकाण्ड. कामरूप स्वच्छदं धृतप्रवयोविप्रवेषो यौगन्धरायणो भ्रात्रा गोपालकेन सानुरोधं भर्तृकृतेऽनुनीता पतिव्रता वासवदत्तां तरुणब्राह्मणीरूपधरां विधाय रूपविकारयोगेन काणबालकेन परिणत वसन्तकमादाय तया साक मगधराजधानी ययौ ततश्च तत्रासाद्य राज्ञ प्रद्योतस्य दुहितु पद्मावत्या वासगृह प्रविवेश । प्रविष्ट त दृष्ट्वा राजपुत्री पद्मावती सकौतुक त पश्नयति स्म भूसुर कमर्थमपेक्ष्य कन्या बटुक च समादायेहोपस्थितोऽसि ब्रूहि कैषा नयनोत्सवदायिनी कन्यकेति । इत्य तयानुयुक्तेन स्थविरद्विजवेषधरेण तेनापीति प्रत्यवादि राजदारिके श्रूयतामिय मदीयौरसी प्रोषितभर्तृका नामतोऽवन्तिका निखिलविद्याकलाकलापपारंगता विदुषो धामपहाय स्वैरवृत्तिर्दुरात्मा भर्ता जनपदान्तर प्रयातस्तद् राजपुत्रि दुहितरमिमामनेन मे पुत्रकेण सम तव करसरोरुहे निचिक्षिप्सामि यावदह विदेशनिवासिनं जामातर गवेषयित्वा शीघ्रमत्रानेष्यामि तावत् त्वयापि सभ्रातृका सेय मे तनूजा सौहार्दात् परिरक्ष्यतामिति व्याहृत्य तत्क्षणात्लब्धतदनुमतिना तूर्ण लावाणक प्रति प्रस्थानमकारि । यस्मिन्नेव वासरे वसन्तकसखो यौगन्धरायणो महिषीमादाय

निरगात् तस्मिन्नेव वासरे गोपालकेन सह रुमण्वान् रहो देव्या वासगृहं प्रज्वलितेन तीव्रवेगेन ज्वलनेन भस्मसात् कृत्वा हा हा कष्टमहहा अत्याहितमत्याहित वसन्तकसहिता देवी वासवदत्ता निर्दयेनाकस्मिकेन दहनेन दग्धेति सशोक समुद्घोष्य मुक्तकण्ठमरोदीत् ततश्च निदाघदवाग्निरिव देवीदाहप्रवृत्ति सर्वासु ककुप्सु युगपद् व्यस्तीर्ष्ट। ततो जराजीर्णाग्रजन्मरूपिणि यौगन्धरायणे जामातृपरिमार्गणमिथ्याव्यपदेशान्निर्गते ते राजपुत्र्यौ वासवदत्तापद्मावत्यावन्योन्यस्य नयनानन्ददायिनमतिमनोहरमाकृतिविशेष निरूप्य विस्मितमती प्रथमदृष्टिपातमात्रसजातमिथोवहुमानप्रणये संबभूवतुस्तदनु च सौहार्दार्द्रप्रेमसौजन्यशालिन्या मागधराजसुतया सादरमभ्यन्तरं प्रवेशिता सा वासवदत्ता तत्र चित्रभित्तिन्यस्ता दाशरथिहृदयवल्लभा सवत्सरान् बहून् भर्त्रा विनाकृता साध्वीनां सर्वासा पुरोगामिनी जनकतनयां समुद्वीक्ष्य सद्य उपनतासह्यव्यथपतिविरहसंतापसंतातप्यमानापि धैर्यभूषणा केवलं भर्तृहिताभ्युदयकाम्यया वासतीकुसुमसुकुमारहृन्मर्मभिद पराधि सोढु मनसि व्यवससौ। अस्या अनन्यसदृशेन रूपप्रकर्षेण शीलेनाभिजनशंसिना विद्याकलाकौशलेनानवद्येन शयनोत्थानाशनभाषणविधिना गन्धर्वविद्यानैपुण्येन च सुतरा विस्मापितचेता मागधी पद्मावती, काप्येषा नलजीवितसमा दमयन्तीव पुनः पाण्डवेयवधूरिव सत्कुलोत्पन्ना केनापि कारणेन प्रच्छन्नरूपेण नूनमत्र निवसतीति, मनसा कृत्वा सौहित्यस्नेहपूर्वकेणात्मानुरूपेण परिचर्याविधिना ता

प्रीतिपूर्वमुपचचार । कदाचिदम्लास्नुमाल्यतिलकमण्डनप्रसाधिता-तिशयपेशलाकृतिशोभिता निजात्मजामवलोक्य कौतूहल्याविष्ट-मानसा महादेवी तामुपांश्वप्राक्षीत् केनैषा विचित्ररूपा माला-तिलकरचना विरचितेति । इत्थ मात्रा पृष्टा मगधभूभर्तृ तनया प्रत्यभाणीन्मात काप्यवन्तिका नाम प्रवासस्थभर्तृका सुरूपा युवतिर्मदीयवासवेश्मनि तिष्ठति तया स्वहस्तसौष्ठवेनैषा मदर्थे व्यरचीति । अयि वत्से यद्येव तर्हि सेयमतिमानुषविज्ञानशक्तिमती नूनं प्रच्छन्नरूपा दिव्ययोषित् स्याद् यथास्मादृशी मर्त्यविग्रहा न कापि सीमन्तिनी विज्ञानमेवविधं जानीते कदाचित् कदाचिद-निमेषलोचनदेवर्षिप्रभृतय प्रच्छन्नवेषधरा दिवौकसश्चरित्रशील-परीक्षार्थं भुवं पर्यटाव्यमाना सता वसतीरधिवसन्ति वाले शृणु मया कथ्यमानामिमां कथां पुरा बभूव यादवानामग्रणीर्महा-यशा कुन्तिभोजो नाम महीभृद्वयाघ्रो यदीये निशान्ते जातु दुर्वासा नाम दुराराध्योऽतिक्रोधालुर्देवर्षिरुवास तत्सपर्यायै राज्ञा समादिष्टा नृपतनया कुन्ती निर्ममेण मनसा यथाशक्ति सप्रश्रयण तं परिच-चार तत. कदाचिदसौ देवर्षिस्तो परीचिक्षिपुरभिवभाषेऽयि बाले यावदह स्नात्वागच्छामि तावत् त्वं क्षिप्रमुष्ण दुग्धौदन सस्कुरु तत सा स्नानं कृत्वा प्रतिनिवृताय तस्मै सुसंस्कृतोष्णपयश्चरु-निर्भर पात्रमुपजहार सोऽप्यङ्गुलीभि पात्र मनाक् स्पृष्ट्वातिवेले-नौष्ण्येन तद्धस्ते कर्तुमसमर्थो भूत्वा राजपुत्र्या पृष्ठे दृश साभिप्राय निपातयाम्बभूव तस्मिन्नेव निमेषेऽवगततदीयेङ्गिता सा चापवद-

वनस्रीकृते स्वीये पश्चाद्भागे परितप्तं तत् पात्रमवस्थापयामास
तत्क्षणाच्च तेनातितप्तेन भाजनेन तस्याः पृष्ठस्य दह्यमानस्यापि
स मुनि प्रीतमना सन् दुग्धोदनं शनकैः शनकैरुदरपूरं जघास
ततोऽतीव प्रसन्नेन तेन दुर्वाससा सहर्ष विश्राणित सत्पुत्रप्राप्तिवर-
मुपलभ्य सा कुन्ती कालेन पाण्डवेयान् युधिष्ठिरभीमार्जुनान्
समस्तजगत्पूजितान् पुत्रान् सुषुवे तस्मात् त्वमप्यविकारेण मनसा
स्वानुरूपाभिरव्यभिचारिणीभिरुपचर्याविरिवस्यासत्क्रियाभि रिहस्थां
तामवन्तिकामुपसेवस्वेति साकूप प्रोच्य पद्मावतीजननी व्यरंसीत्॥
अत्रान्तरे विदूरवर्तिनि कानने मृगयाविहारं कृत्वा प्रदोषे लावाणकं
प्रत्यागतो वत्सभूभर्ता भस्मसात्कृतं शुद्धान्तवासवेश्म दृष्ट्वातिभृश-
विस्मितमतिः पार्श्वस्थान् मन्त्रिणोऽहो किमेतत् संजातमिति
सविस्मय पप्रच्छ पृष्टैश्च तैरुदश्रुभि सविषादं देव क्षीणपुण्यकर्माणो
मन्दभागिनो वय कथमिव दग्धविधिहतकस्य दुश्चेष्टितं दुष्प्रसहं-
मत्याहित विज्ञापयामस्तथापि विज्ञापयामोऽद्य पूर्वाह्णेऽकुत सभवेन
यादृच्छिकेन दहनेन न परमादरपात्रीभूता वसन्तकसहिता महिषी
वासवदत्ता दग्धेत्युक्तेऽतिमोहमुषितसंज्ञस्तीव्रकुलिशनिर्घातप्रहृतो
वनस्पतिरिव सपदि पांशुले क्षितितले निपपात। तत्समनन्तर
शिशिरमलयजसलिलकणानजस्र किरद्भिर्युवराजगोपालकप्रमुखै
राजपुरुषैः प्रयत्नत समाश्वास्यमानः कथमपि प्राप्तचेतन उदयनः
प्राणसमाविनाशाभिशोचनसहस्रधाविदेदीर्यमाणान्तरात्मा हा
जीवितसमे वासवदत्ते गाढानुरक्त मा त्यक्त्वा निस्त्रिंशेव क्व नु

गतासीति प्रमुक्तकण्ठ क्रन्दन् भुजान्तरालपर्यन्ताविरतनिपतद्वाष्पबिन्दुसततिविरचितकृत्रिममुक्ताहार सन् निर्वेदातिरेकाद् दौर्भाग्यहतजीवितपरित्यागोन्मुखो बभूव मुहूर्तान्तरे च सेय वासवदत्ता विद्याधरचक्रवर्तिन पुत्ररत्न जनयिष्यतीत्यादीनि कतिपदेभ्यो वासरेभ्य पूर्व शशिकुलप्रियेण नारदेनोक्तानि वचास्यनुस्मृत्य पुनश्च भगिनीवत्सतस्यापि स्वल्पशोकस्येव दरीदृश्यमानस्य गोपालकस्य वदनं पुरतोऽवलोक्य दरमन्दीभूतविषादावेगो जीविताशामवलम्ब्य ध्यानसमुद्रे निममज्ज । एवविधे व्यतिकरे वासवदत्तादाहप्रवादेषु सर्वासु दिक्षु मंक्षु परिसृत्य कर्णाकर्णि सविस्मयमनुशोश्रूयमाणेषु तथाशाबन्धावलम्बितधैर्ये दुरुद्वहप्रेयसीविरहप्रतापानलदन्दह्यमानेऽपीषदल्पीभूततद्विनाशशोके वत्समहीभृति विदितलावाणकान्तःपुरदाहवृत्तान्तो तद्गुणाकृष्टमना दूरदर्शी कालज्ञो मगधराज. प्रद्योत: कार्याकार्यविवेकिना यौगन्धरायणेन निजविभुपाणिग्रहणार्थमभीक्ष्णमभ्यर्थितपूर्वामात्मतनूसभवा वात्सल्यभूमि पद्मावती तस्मै भार्याविहीनायोदयनाय भूभ्रेन्द्रस्नुपागाद्रिरिव गौरी कृशानुरेतसेऽतिसिसृक्षु सदेशहर विससर्ज । तस्मिन् मागधदूते नृपकटक सप्राप्य प्रद्योतस्य वाचिक ददति तत आयुष्मन् पद्मावतीकरपीडनेनैव सर्वमभिलषितार्थं प्राज्यराज्यवभवादिकं व्यक्त साधयिष्यसि तत् कालातिपात निषिध्य तामुपयमस्वेति वासवदत्ताविश्लेपदु खं विस्मारयितुं मन्त्रिभि साग्रह पात्याद्यमानो भ्रातस्तया क्रियतामिति स्वहितैषिणा श्यालेनापि गोपालकेन

स्मितपूर्वमनुज्ञायमानो नूनमेभिर्मदर्थं कूटोपायः प्रयुक्तः स्यात् तथा मदीयदयितापि किं नु खलु क्वचिज्जीवेदिति सामिसंदिग्धमतिरुदयन औद्वाहिकसंदेशार्थमूरीचक्रे। तत्क्षणमेव राजकार्तान्तिकैः शुभनक्षत्रयोगाधिष्ठितं शुभंकर लग्नाह निर्णाय्य लौकिकसमयानुवर्ती कालक्षेपासहिष्णु. समुपलब्धोदयनानुज्ञो मन्त्रिमुख्यो यौगन्धरायणो राजन्नस्माभिस्त्वदीय वाचिकं स्वीकृतमद्यप्रभृति सप्तम्यां तिथौ वत्समहीक्षिदुदयनस्त्वद्दुहितृपाणिग्रहणाय प्राप्स्यतीति संदिश्य वैवाहिकप्राभृतसभृतं प्रतिदूत मागधदूतेन सम तस्मै मगधराजाय प्रजिघाय। ततो मगधाधीशः प्रद्योतो दूतमुखात् प्रतिसंदेशमाकर्ण्य प्रमुदितचेताः सन् वत्सावत्सलाया देव्या उपाक्षं बहुमतवरलाभपुलकितवपुषेऽचिरभावि-विवाहचिन्ताजनितव्रीडारुणिताधोमुख्यै स्निग्धदुहित्रे मिथ परिणयसमयं स्मितपूर्वं शंसित्वा स्वविभूतिसदृशभूरिवैवाहिकोपायनादि-बहुविधोपस्करसभारसंभृतमुदयनपद्मावतीकरपीडनमहामह भूत्यै. सज्जीकारयामास। तदानी पद्मावतीगृहेऽवन्तिकासंज्ञया गूढ काणवटुरूपिणा वसन्तकेन सार्धं निवसन्ती सा राजमहिषी वासवदत्ता तदुद्वाहवृत्तान्तश्रवणेन दुर्विगाहनिर्वेदाकूपारे सहसा निमग्नापि भर्तृकल्याणवर्द्धकमानसा हृदि तीव्रावेगेन प्रजाज्वल्यमानं संतापानलं धैर्यातिशयेन निगृह्य निर्विकारवदना भूत्वा च पुण्याहे संप्राप्ते प्रातस्तरामभिमतवरहस्तसपर्कसकल्परोमाञ्चितसर्वाङ्ग-शोभनामनल्पद्युतिरोचिष्णुमणिखचितोज्ज्वलवधूवेपविभूषिता पद्मावतीं सौहार्दात् स्वहस्तनिर्मिता-

भ्यां दिव्यमाल्यतिलकाभ्यां समधिकतरं व्यबुभूषत् । तत. सप्तमेऽह्नि यौगन्धरायणरुमण्वत्प्रभृतिभिर्मौलै कृतानुयात्र· ससैन्य उदयन सर्वत कौतुकतोरणवैजयन्तीमालासमाकुला महोत्सवप्रमुदितसमस्तपौरलोका मागधराजधानी प्रविश्य सानन्द प्रत्युद्गतेन श्वशुरेण प्रद्योतेन स्वयं नीयमान. समलकृततोरणसुवर्णकुम्भपुष्पमालासुमण्डित राजपुत्रीकौतुकमङ्गलावसरसमुचिताकल्पविशेपप्रसाधिताविधवानिवहसनाथ हृदयगमालोक विवाहमण्डपं प्राप्य पुण्डरीकाक्ष पद्मालयामिव निष्कलङ्कवदनेन्दुपश्चात्कृतपौर्णमासचन्द्रबिम्बामतिमञ्जुलाकृतिमुषितलोकलोचना पद्मावतीमद्राक्षीत् ततश्चोपयमकौतुकक्रियाया विधिपूर्व प्रवृत्ताया तया सह वेदिकामध्यारुह्य सप्तपदीप्रक्रमेणाग्निसाक्षिक कोमलतनूलतायास्तस्या सस्वेदपुलकित करकिसलयमग्रहीष्ट । तस्मिन्नेव क्षणे स वत्सराजो नववध्वा अम्लानदिव्यमालातिलकभूषा निर्वर्ण्य विस्मयविस्फारितनयनो भूत्वा मनसि व्यचीचरत् क्वापि प्रच्छन्ना मे प्रियतमा वासवदत्ता नूनं जोवत्यन्यथा तामृते न काप्यपरा दिव्य स्रक्तिलकविरचनामेवविधामवैतीति । ततो निर्विघ्नपरिणयविधौ समाप्ते नवोढया तया सह किंचिद्विश्रान्तिसुखमनुबुभूषु गर्भवेश्मनि समासीनं तमुदयनमभ्युपेत्य यदृच्छयाप्यत्र निगूढा देवी वासवदत्ता स्वभर्तृर्दृग्गोचरे मा निपतेदिति मन्त्रभेदाशङ्कित सूक्ष्मदृष्टिर्यौगन्धरायणो देव प्रशस्तनक्षत्रयोगाधिष्ठितेऽद्यैव लग्नाह्ने कौशाम्बीप्रयाण क्रियतामन्यथा प्रस्थानयोग्यमीदृश पुण्याह भवत्कृते

पुनर्न संभविष्यतीति विज्ञप्तिमकार्षीत् । सततनिजकल्याणनिरतस्य राज्यभारोद्वहनकुशलस्य सख्युर्वचसोऽनतिक्रमणीयत्वात् सखे तथा कुर्म इति व्याहृत्य वत्सभूभर्ता ससम्भ्रमसज्जीकृतप्रयाणसभारां परिजनपरिवृत्तामुद्दामवात्सल्यार्द्राभ्या मातापितृभ्या तया परस्पर-विश्लेषदु:खिताभि. सनाभिभिर्वधूभिः सस्नेह परिरभ्यमाना साश्रुवदना नवपरिणाया पद्मावतीमादाय श्वशुरावामन्त्र्य कौशाम्बी प्रति प्रतस्थे तदानी च पद्मावनीहस्तनिक्षेपभूता सहगमनाय तया समादिष्टा वासवदत्ताप्यावरणांशुकपरिच्छन्न वाहनमविरुह्य विकृतरूपेण वसन्तकेन साकं पृष्ठतो गूढमनुससार । ततः काल-क्रमेण समासाद्य निजपुरी प्रेयसीविरहसतप्तक्षामाङ्ग क्षमाभृदु-दयनः पुष्पसायको रतिमिव तामेवानुध्यायन् नवोढया पद्मावत्या सममन्त.पुर प्राविक्षत् तत्रान्तरे च वासवदत्तापि पत्या समुज्झिता दुर्भगेव तादृग्भूता विचित्रा निजावस्थामनुशोचन्ती गोपालका-वसथ वैकाले प्रविश्य तदवस्थस्वसृदर्शनोद्गताश्रुक्लिन्नवदनमग्र-जमभिवाद्य विललाप । तस्मिन्नवे समये मिथ.समयादागत्य मन्त्रिणौ यौगन्धरायणश्च रुमण्वाश्च भर्तृ विरहव्यथा व्यपनोदितु राजवल्लभां यथाशक्ति यावत् प्रयत्नतोऽससान्त्वता तावदवन्तिका-परिचर्यानियुक्तेन परिजनेन तूर्णं राजभवनमागत्य देवि केनापि कारणेन राजकुल परिहृत्यावन्तिका नाम प्रवयसा द्विजन्मना देवी-हस्ते न्यसीकृता सा युवतिर्युवराजगोपालकमन्दिर प्राविशत् तदत्र किं करवामेति चिन्तापूर्वं विज्ञप्ता सा नववधू पद्मावती प्राब्रवीद्

यूय तत्र पुनर्गत्वा मद्वचनात् तामभिभाषध्वमवन्तिके यथा त्वं मदधीना निक्षेपभूता तथा ममान्तिकमागत्य जनकप्रत्यागमनसमय-पर्यन्तं निश्चिन्तया त्वया यथासुखमत्राध्युष्यतामिति। समाकर्ण्य तद्वचस्तस्मिन् परिजने निर्गच्छत्यदभ्राशकाविष्टेन नृपेण सकौतु-कमप्रच्छि यत् ते माल्यतिलकविरचना केन विहितेति पृष्ट्या तयापि पद्मावत्यैव प्रत्यवादि हे भर्तरर्धमासात् प्राक् प्रोषित-भर्तृकैषा मे दुहितावन्तिका नाम निक्षिप्यत इत्युक्त्वा केनाचिद् द्विजेन मद्धस्ते स्थापिता योषिदस्ति तया हस्तशिल्पकुशलया निर्मिता मम माल्यतिलकभूषेति। तत्क्षणात् ससंभ्रममुत्थाय सैव निःसंशयं मामकीना हृदिस्था प्राणसमा भवेदिति मत्वा द्रुततम-गतिरुदयनो गोपालकनिशान्तमगाद् गत्वा चाभ्यन्तरं प्रविश्य गोपालकयौगन्धरायणरुमण्वद्वसन्तकसहितामनिष्टप्रवासात् प्रति-निवृत्तामत एव सैंहिकेयमुखाद्विनिर्गतामैन्दवीं तनूमिव विरह-दुर्बलाङ्गीं दयितदयितां वासवदत्तां दृष्ट्वा च सप्रमोदविषादव्यतिकर-विमोहितचेतनः सपद्यमूर्च्छीत् ततश्च सापि सीताविनाकृतं सूर्यवंश-धुरंधरं राघवमिव वीतसंज्ञं प्रियतममवलोक्यानिर्वचनीयमानसिक-व्यामोहापहृतसंज्ञा सती सहसामुहत्। तथाभूतं व्यतिकरं परि-जनमुखाद् विदित्वा व्याकुलीभूतमनस्का नववधूः पद्मावत्यपि सत्वरं तत्रागत्य वसन्तकनिवेदितसमस्तवृत्तान्ता भूत्वा तादृगवस्थं प्रणयिमिथुनमनुकम्पमाना निःशब्दमरोदीत्। अथ सर्वेषु तत्रस्थेषु दैन्यविक्लवेषूद्वाष्पलोचनेषु सशृण्वत्सु कुटिलनीतिप्रयोगाति-

निपुणोऽप्यकुटिलस्वभावः सुकृती मन्त्रिपुरोगो यौगन्धरायणो पुन.प्रकृतिस्थं राजानमवोचदायुष्मन् नात्र कश्चिदपि देव्या वासवदत्ताया अपराधो मामेवापराधिनं पापाचारं निगृह्णीष्व न. पूर्वदिग्विजयोद्योगप्रतिरोधिन. पार्ष्णिग्राहस्य मगधराजप्रद्योतस्य दुहितृप्राप्तिद्वारा त्वां प्राज्यसाम्राज्यं प्रापयितुकामेन मया सर्वमिदं व्यधायि देव सेयं प्रधानमहिषी विशुद्धशीला प्रवाससमये तव द्वितीयदेव्या पद्मावत्या सुरक्षितेति। तदनु मागधी भर्तारमभ्यभाषिष्ट प्रभोऽहमेवास्या ज्येष्ठभगिनीसमायाश्चारित्रकवचाया वासवदत्तायाः शीलसाक्षिणी प्रज्वलिते हुतभुजि सांप्रतमस्याः सुचरित्रप्रकाशनार्थमात्मानं जुहोमीति। मैवं तावत् प्रवासकालीनात्मचारित्रसंशुद्धिप्रदर्शनायाहमेव युष्मत्समक्षं प्रदीप्तेऽग्नौ प्रविशामीति वासवदत्तापि व्यक्तमवादीत् तदनन्तरं चोदयनोऽपि ध्रुवमब्रवीद् यन्मदेकपरायणायाः पातिव्रत्यभूषणाया देव्यास्तुहिनशुभ्रामनवद्यशीलसंशुद्धिं सर्वथा श्रद्दधामि नात्र तनुरपि विचिकित्सा कर्तव्या केवल मदर्थे दुर्विषहविश्लेषपराधि हृदयवल्लभा मे द्वितीया निर्विकारेण मनसेयन्तं कालमतितिक्षिष्ट येनाहमेवैको ध्रुवमपराध्यामि यदि चेतसि मेऽस्यामविश्वासगन्धोऽपि वर्तते तदग्निप्रवेशोद्यमस्तावदास्ताम्। इत्येव परंपरमुक्त्वा यौगन्धरायणादिषु विरतेष्वकाण्डेऽशरीरिणी सरस्वती गगनादुदपादि भो राजन् सौभाग्यवानसि यदीयो राज्यभारोद्वहनकुशलो मन्त्रिवरेण्यो यौगन्धरायणो यदीया हृदिस्था प्राणसमा वासवदत्ता पातिव्रत्य-

भूषणा स्वप्नेष्वप्यचिन्तितशीलखण्डना नृप कालज्ञस्य षाड्गुण्य-प्रयोगकृतमुखस्य यौगन्धरायणस्य संग्रामाजिरापराङ्मुखस्योर्जस्वलपराक्रमस्य रुमण्वतश्च साहाय्येन पृथ्वी पृथ्वी हस्ते करिष्यतस्ते निरुपम कल्याण यावज्जीव सपत्स्यत इति। गम्भीराम्बुवाह्-गर्जितं श्रुत्वा मेघनादानुलासिन शिखिन इव प्रतिशब्दमुखरित-दिक्चक्र व्यामोद्भवं तद् वाक्य निशम्योद्ग्रीवास्ते सर्वे मुद परमामवापुर्विशेषतश्च क्षितिक्षिदुदयनोऽतीव प्रमुदितमना अकुण्ठि-तराष्ट्रभक्तिपिशुन मन्त्रिमुख्यचरित्रं कृतज्ञतापूर्वकमुच्चैरभिष्टुत्य वपुष्मत्यौ रतिनिर्वृतीव लोकोत्तरमत्तका-शिन्यौ प्रीतिकरसहवा-सोपचितप्रेमादरे वासवदत्तापद्मावत्यावुभयो पार्श्वयोराददज्जगदे-कसुखिनमात्मान मन्वानश्च निजवसतिं प्रति प्रचचाल। ततोऽपरेद्यु प्रवर्तितदेवीयुग्मसमागममहोत्सवप्रसगे पानगोष्ठिकाया प्रारब्धाया दुष्करकार्यार्थसाधनचरितार्थीकृतमनोरथेषु सततोदयोन्मुखोदयन-प्रियेषु सुहृत्सुहृत्सु परस्पर सानन्दमभिनन्दत्सु गोपालकयौगन्धरा-यणरुमण्वद्वसन्तकेषु विचित्रकथासश्रवणावर्जितमन सु तेषु सकौतुक समाकर्णयत्सु कमनीयवासवदत्तानयनेन्दीवरलाञ्छित तथा पेशल-पद्मावतीवदनेन्दुप्रतिबिम्बाधिकस्वादु मद्य पाय पाय मतिसचिवा-ग्रेसरस्य वपुषि मुधाधवलस्मितिपुरस्सरा दृष्टिसुधाधारामभिवर्षन् युगपदवाप्त दुर्लभकान्तायुगलसगमोद्भिन्नसर्वाङ्गीण-रोमाञ्चप्रहृ-ष्टान्तरङ्गो वत्सजनपदपरिवृढः सहस्रानीकात्मज उदयनोऽपि सखे यौगन्धरायण सततापकारिणस्तवोपकारेण व्यपेताहङ्कारेणा-

तिभृशमनुगृहीतोऽस्मि त्वदीयाप्रतिहतबुद्धिसामर्थ्यसभवेन संप्रमोदोद्रेकेण मदीयं हृदयं सर्वतोऽङ्कुरितपुलकोद्भेदेन शरीरेण साकं द्रवीवोभवीतीव ननु चक्रनेमिरिव भाग्यक्रमोऽप्यनारत परिवरीवर्ति येन सुखान्ते दुःखं दुःखान्ते सुखं संजाजायते प्राधान्येनाभिमतप्रियवन्धुजनविरहधूमकेतुनिर्वापणेन ममेव कस्य मनः सोच्छ्वासं न प्रीयतेऽस्त्यत्र निदर्शनं श्रूयता मयेदानीमुपवर्ण्यमान तात्त्विकमुपाख्यानकं यद्युपशुश्रूपेति प्रस्तुत्य वक्तुमुपचक्रमे पुरा राजवतीमपि राजन्वतीमक्षय्यधनधान्यविभूतिसंपन्नसुखितसमस्तप्रजालोका कामधेनुमिव मनीषितानेकविधादभ्रवसुदामुर्वीमुर्वी न्यायतः प्रशशास महाविक्रमः सत्यसंगरो लोकत्रितयविश्रुतकीर्तिरस्मदीयस्य सोमवंशस्यादिपुरुप. पुरूरवोनामा वसुधायामिव विशाले त्रिविष्टपेऽपि स्वैरसंचारी मेदिनीपतिरथ कदाचित् स पुरूरवा. स्वच्छन्दं नन्दनोद्याने चंचूर्यमाणः सर्वंदमनोभूवशीकरणौषधीमिव हृदयमुपमप्सरसमुर्वशी यदृच्छयावलुलोक दृष्ट्वा चाविलष्टकान्तितरङ्गतरङ्गिणी सपदि व्यपेतसञ्ज्ञो भूतले निपपात तत्काल चासावपि स्वर्वधूस्त चक्षुष्य पुरुपोत्तमं समुद्वीक्ष्य दुष्टरमन्मथमोहाब्धौ निममज्ज तस्मिन्नेव मुहूर्ते क्षीरोदशुखशयित सर्वज्ञो विष्टरश्रवास्तथाभूतं प्राथमिकदर्शनोत्थोभयानुरागातिवेलमूर्च्छित कामिमिथुनं परिज्ञाय कृपाविष्टमना तत् परिचर्यार्थमुपस्थित नारदमाज्ञापयाञ्चकार भो कलिप्रिय सप्रति कामातुर पुरूरवा नन्दनोपवने वीतसञ्ज्ञ आस्ते तथोर्वश्यपि तद्रूपदर्शनापहृतचेतना मदनवशं

गतास्ति तच्छीघ्रं गत्वा दिवस्पतिना पुलोमजाजानिना तस्मै महीक्षिते पुरूरवसे ता दिविषद्योषित प्रदाप्य कलहप्रियोऽपि त्वमघटितौ तौ परस्परप्रणयिनौ सघटयेति तत स पद्मनाभाज्ञावशंवदो नारदो मङ्क्षूत्पत्यान्तरिक्षं मुहूर्तान्तरे पौरदरमुद्यान प्राप्य हे राजन् करुणानिधिना पुण्डरीकाक्षेण त्वदीयकाङ्क्षितार्थनिर्वाहणायात्र प्रेषितोऽहमस्मि तदेहीत्युक्त्वा त राजानं पुन प्रकृतिस्थं समादाय दिवौकसामधिपते. शतमन्योरभ्यर्णं गत्वा च तस्मै वैकुण्ठस्य मनीषा निवेदयाम्बभूव तत्क्षणं च देवदेवस्य विष्टरश्रवसो निदेशस्य सर्वथानुल्लङ्घ्यत्वात् सद्योजनिष्यमाण स्निग्धद्युयोषिद्विरहिताना सुमनसा दैन्य विजानन्नपि मेघवाहन पुरूरवसे तामप्सरस ददौ तदनन्तर निजमनोरथशतास्पदीभूतया तयोर्वश्या समं पुरुहूतनारदप्रभृतीस्त्रिदिवेशानापृच्छ्य प्रहर्षरोमाञ्चितवर्ष्मा भूभुक्कुञ्जर पुरूरवा अतिशयचमत्कारक्षमद्युयुवतिदर्शनप्रीतिं लोकलोचनेभ्यो ददानो मर्त्यलोकमवततार तदानी दिवो ललामभूतायामप्सरस्युर्वश्या तिरोहिताया सदानन्दमयोऽपि द्युलोको विषण्णालोक इवाजरामरोऽपि निर्जीव इव पर शतसहस्रानिमेषलोचननिवहसकुलोऽपि शून्यीभूत इव किल ददृशे ततोऽविनश्वरप्रेमपाशनिबिडबद्धैकीभूतहृदयौ विधिवद्विहितविवाहमहानहौ तौ जपती स्वर्लोकेऽपि दुर्लभ मनोभूसाम्राज्यसौख्य यथातृप्ति निर्विशन्तौ सुखमासाञ्चकातेऽथ गच्छति काले जातु नाके सुरासुरविग्रहे सुघोरे रोमहर्षणे समवृत्ते बलीयोभिर्दिविषद्वैरिभिर्निनरामभिद्रोभूयमानेन

पराजयापमानाशङ्कितेन नमुचिसूदनेन राजन् सग्रामेऽस्मिन् नः साहाय्य कुर्वित्युदञ्जलिना प्रार्थितो राजसिंह. परोपकारनिरत. पुरूरवा झटिति विहायसा त्रिदशालयमुद्गत्य दानवेन्द्रप्रमुखान् प्रवलबलोत्सिक्तान् संख्यातिगान् सुरद्विपोऽत्यद्भुतेन भुजवीर्येण निहत्य ततोऽवशिष्टास्तान् सहस्राक्षशत्रून् कादिशीकान् कारयामास ततश्च विजयमहोत्सवे प्रारब्धे श्रुतिपेये च दिव्यतौर्यत्रिके सहर्षं विधीयमाने मृदङ्गादिवादित्रानुसारेण नरीनृत्यमाना प्रमादप्रकटिताभिनयदोषा स्वर्वधू रम्भा निर्वर्ण्य पुरूरवाः समग्राणा दिवौकसां सगन्धर्वविद्याधराणा साक्षात् पश्यतामप्यट्टहास चक्रे तत्क्षणात् प्रज्वलितामर्षानलप्रदीप्ताननो गान्धर्वाचार्यस्तुम्बुरू रे रे दुर्विनीत विक्रमदुर्ललित स्तोकाभिनयस्खलितेन लोकत्रयसपूजिताना वास्तोष्पतिपुरस्सराणा विबुधाना समक्षमपि प्रोच्चै. प्रहसतस्तवोर्वशीविरहो मनोप्रमाथी बहुसवत्सरावधिको भवत्विति शशाप तच्छ्रुत्वा कुलिशप्रहारोन्मूलिते भूरुह इव दुस्सहशापवचताडिते सनिर्वेदमधोमूखीभूते पुरूरवसि सकटसुहृद सापरायिकसहायस्य तस्य दयमान आखण्डलस्तुम्बुरुं सखेदमादिदेश गाधर्वमर्मज्ञ किं न वेत्सि नो बहुमतोपकारिणमेनं तदिदानी शापावधिरतिमात्र सक्षिप्यतामिति तथेत्यभिधाय स सुनासीराज्ञाप्रशमितमन्यु. सगीतोपाध्यायो राजन् यद्यपि समुद्घोषित. शापो मयाप्यन्यथाकर्तुं न शक्यते तथापि यदा हृदिस्थोर्वशीविश्लेषविह्वलेन भुव पर्यटात्यमानेन त्वया बदरीतपोवने तपस्यत उर्वशीजनकस्य नारायणस्य

दर्शनप्रसादो लप्स्यते तदा शापोऽयं समाप्स्यत इति शापावधि परिकल्पयाञ्चक्रे ततश्चासा अस्मदीय आदिपुरुषस्तीक्ष्णाभिशाप-निर्घातविनष्टतेजा क्षितितल पुनरवतीर्य निजबहिश्चरजीवितभूता प्रियतमामलभमानो दुर्विषहतद्विरहजोन्मादमुषितविवेकबुद्धि सन्नितस्ततः सर्वत्र ता शापवशतिरोभूतामपि परिमार्गयितु परि-बम्भ्रम्यमाणो दैवयोगाद्धिमाद्रि समया वदरीतपोवन समासाद्य तपसोग्रेण तपोनिमग्ननिश्चलमति नरनारायणमाराराधात्रान्तरे तच्छापदोषादुर्वश्यप्यकस्मादुत्पन्नदयितभर्तृ-विप्रयोगपराधिपरिम-रीमृद्यमानसुकुमाराङ्गयष्टिश्चिरन्यस्तेव समुत्क्रान्तप्राणेव नि सज्ञा भूत्वा पुत्तलिका तन्तुभिरिव तनीयोभिरसुभि कथचिद् दध्रे तत प्रीणितेन वदरीनाथेन निजोरुसंभवाया दुहितुरुर्वश्या वात्सल्या-च्छापावसाने पुनस्तया समायोजित पुरुरवा पीयूषरसप्रतीका-शानि मिथोविरहसमयपुञ्जीभूतमाराणि सहवासमुखानि प्रकाम-तोऽनुवभूवैवकारं चेत प्रमाथिदु खपर्यवसाने मनोल्लादिसुखोदय सजायत इति । समाकर्ण्य भर्तृमुखोदीरितामुर्वशीपुरूरवसोराख्या-यिका कथ हृदयवेधिन्यपि विप्रयोगे हतप्राणानवलम्ब्य जीविते-श्वराय तनुप्रणयमात्मान निस्त्रपमदोदृशमिति व्रीडावैलक्ष्यावनत-मुखी वासवदत्ता प्रत्यक्षीकृत्य यथाकालप्राप्तरूपनयप्रयोगकुशल परमनोजिघ्र सुधिया वरो यौगन्धरायणोऽपि श्रूयता वो मन सु श्रवणकौतूहल्य चेदिति प्रस्ताव कृत्वा कथानकमित्युपाववर्णदस्ति नाम्ना निमिराप्यतिमिरा वसुधराहारयष्टिर्लक्ष्मीविहृतिभूमिर्महा-

पुरो तत्र बभूव विहितसेनो नाम मेदिनीपतिर्यो विश्वभराप्सरायितामपरा मनमिजजायामिव मनोहारिणी तेजोवतीसंज्ञां कस्यचन राज्ञो नन्दिनीमुपयेमेऽथ जातु नवोढवधूपरिचुम्बनप्रसक्तवदनोऽतिभृशनिधुवनशील स नृपो जीर्णज्वरेण जगृहे येनासौ शीघ्रस्वास्थ्यसपादनार्थमगदकारैर्निषिद्धप्रियासगमो भूत्वा तितिक्षाधैर्यविवर्जितत्वात् सततपरिचितसुरतसभोगस्यालभ्यमानत्वाच्च समधिकप्रज्वलितज्वरो विचेतनकल्पो दिवानिशमुत्स्वप्नायमानस्तपस्वी संतापातिरेकदूषितेन रुधिरेण ग्रन्थितं ग्रन्थिं वक्षोऽन्तरे दधार तं तादृगवस्थं मृतप्रायं सशोकमवलोक्य चिन्ताव्याकुलत्वात् किंकर्तव्यताविमूढचेतसो मन्त्रिणस्ताश्चिकित्सकान् कीदृगस्य रोगो विशेषो वा भविष्यतीति पप्रच्छुरेव पृष्टेषु तेषु ज्वरविषमलिनीकृतरुधिरजोऽयं हृदयग्रन्थिर्भेषजयदुश्चिकित्स्यो भवति परन्त्वतर्कितत्तीव्राशनिप्रहारसकाशयोरतिभयाभिशोकयोः प्रहारेण स ग्रन्थिः स्वय यदि स्फुटेदिति प्रत्युक्तवत्सु तेऽमात्या. परस्परं समन्त्र्य ततो रोगिन राजानमभ्युपेत्य मुक्तकण्ठ रुदित्वा च बभाषिरे देव ते बल्लवा देवी व्याधि· स्तं त्वामनुशोचन्ती सद्य आत्मानं व्यापाद्य पञ्चतामगमदिति तत्क्षण देवीमरणोत्थाभिशोकातिवेलपेपिष्यमाणहृदयस्य तस्य वक्षोऽन्तर्गतो ग्रन्थिः सहमा बिभेद ततश्चाचिरेण सर्वौषधासाध्यव्याधिजनितप्राण-सशयसमुत्तीर्णो यमसदनात् प्रतिनिवृत्तकल्पोऽसौ वसुधाधिपो विहितसेन आत्मनो हितकारिभिरमात्यैं स्मितपूर्वमर्पिता प्राणदा हृदयवल्लभा ता देवीमति-

मृत्युमिव कण्ठे गृहीत्वा विस्मयाना सर्वेषामतिभूमिं गतो रोमहर्षण-निर्भराङ्गः सन् निजविपदर्णवोद्धर्तॄंस्तान् मन्त्रिणश्च ता च सुतरां संमानयामास राजन् केवल स्वामिमुखच्छायानिरूपणदक्षां तच्चित्तानुवर्तिनी वेतसी वृत्ति समाश्रित्यैव मन्त्रिभावः कथमुपलभ्यते तदेव साचिव्य यद् राज्यकल्याणसम्पदुदयप्रजापरिपालनयोगक्षेम-साधनं पुनश्च देवि गरीयान् देवीशब्दः प्रियवदतामात्रासाध्योऽपि सो भर्तृहितकारित्वेन प्राप्यते तस्माद्धेतोर्देव तव दिग्विजयप्रति-रोधकेन पार्ष्णिग्राहेण प्रद्योतेन विवाहसम्बन्धद्वारा सन्धित्सुभी रुमण्वदादिभिरस्माभिरीदृग्रूप उद्यमस्त्वत्साम्राज्यार्थमन्वस्थायि तथा देव्या वासवदत्तयापि चेत प्रमाथिनी त्वद्विरहवेदना सोढ्वा भृश तवोपाकारि। निर्विकारप्रणयसौहार्दनिधिभि परमविश्वास-पात्रैर्युष्माभि सर्वै सततोपकारिभिर्नितरामुपकृतोऽह कृत्स्ना पृथ्वी पृथ्वी हस्तगतामिव तर्कयामीत्यूचिवान् सौभाग्यवानुदयनस्तै. साकमेवविधान् विश्रम्भसलापानविश्रान्त कार कार वासवदत्ता-यास्त्रपाज वैलक्ष्य च तद् दिवस च सुख व्यतिवोवहत् ततश्चात्तरे-द्युर्विद् रतिलक्ष्म्योरिव परिपूर्णकान्ति-शोभिन्योस्तयोर्वासवदत्ता-पद्मावत्योर्मध्ये विराजमानो विहृतिमकरोत् तावन्मागधवाचिकहर-स्तत्समीपमुपेत्य तस्मै मगधराजस्य सदेशमित्थ न्यवीविदत् कपट-नीतिप्रयुक्तिपारगतैरसमञ्जसकारिभिस्तावकीनै सचिवै कूटोपायेन निपुणमतिसचाय मुषितास्माधिकदुहितृका वयमुद्दामा व्यथामनुवो-भूमस्तत्तथा कुरु यथा नो जोवित निर्वेदसागरनिमग्न न स्यादिति

निवेद्य च स सदेशहर. पद्मावतीमुखन्यस्तदृष्टिः सन् तामभ्य-भाषिष्ट राजपुत्रि ते मातरपितरौ त्वां सविषादमाज्ञापयतोऽयि वत्सेऽपराङ्गनाप्रसक्तेन वत्सराजेन कुटिलनयद्वारा दूरमपहृतां स्निग्धां त्वामिदानी बुद्ध्वा सुतरा व्यथमाना आवा दैवदुर्विपाका-दीदृशं कटुरस कन्याप्रसूतिफलमास्वादावहे इति । तयोर्वाचिकं निशम्य नवपरिणया पद्मावती तं दूतमवादीत् सौम्य मद्वचनादेवं मम मातापितरौ विज्ञापय यदसमीचीनेन विषादेन कोऽर्थ इहस्याहं सुखिता भर्तृसहवासनिर्वृतिमनुत्तमा निर्विशामि यथा प्रेमानुक्रो-शार्द्रहृदयो भर्ता मयि स्निह्यतितरा वासवदत्तापि भगिनीव मां सस्नेहमपेक्षते तथा युवाभ्या मयि चिन्ता न कार्येति । इत्थंकार सपत्न्या पद्मावत्या प्रतिवाचिके प्रोक्ते सवत्सराजा वासवदत्ता तं मागधसदेशहारक यथावदतिथिसत्कारेण सभाजयित्वा स्वदेशं प्रत्य-जीगमत् ततश्च तस्मिन् प्रस्थिते विदूरवर्तिनो बन्धुजनस्यानुस्मार-मनुस्मारमुत्कलिकासहस्रकीलिता दरविषण्णवदनां मागधी दृष्ट्वा तस्या उत्कण्ठां व्यपनोदयितु पार्श्ववर्तिनं नर्मवतारं वसन्तकं हे नर्मपरिहासकथाकोविद कथय कामपि मनोविनोदिनी कथामित्य-भ्यार्थितयत । अयि भोः कर्णं सावधानं दद्ध्व यूयं सर्वे यदि मदी-याख्यायिकाशुश्रूषा मनसि भुजङ्गमीव मूर्धानमुन्नमयतीति कथामुखे साटोप समुदीर्य चिकथयिषित कथाजालं स्वैरं वितनितुं प्रारब्धेत उत्तराहि निःशेषक्षितिमण्डलालंकारभूषणायिते लक्ष्मीसरस्वती-प्रसादलब्धप्राज्यहिरण्यविद्यासम्पन्नसमग्रपौरलोके पाटलिपुत्राभिधे

महानगरे कोऽपि महाधन सार्थवाहो धर्मगुप्तो नाम बभूव तस्या गृहिणी चन्द्रप्रभा नाम चन्द्रप्रभाद्योतितालोका निर्मले मुकुरे प्रतिबिम्बिता चान्द्रमसी मूर्तीव मुरूपा या कदाचिदापन्नसत्त्वा कालेऽतिमानुषाकृतिविशेषविराजितामप्सरसमिव तनया प्रसुषुवे, सा शुभ्रस्मितिविकसिताननेन्दुरदभ्रवपुष्कान्तिदीपितसूतिवेश्मा प्रसूतमात्रैव सा कन्यकोपविश्य सर्वतो दशनचन्द्रिका किरती हे पितरौ कस्मैचिदपि कर्हिचिदपि मा परिणयहेतो प्रदातु नार्हथ इति सुविस्पष्टाक्षर व्याजहार जगदेकाश्चर्यसदृश तच्छ्रुत्वा सन्त्रासविस्मयकोटिमधिरूढेन जनकेन वद का त्वमसि देवी नूताहोस्विदसुरी किमर्थमस्मद्गेहेऽवतीर्णासीति प्रणतिपूर्व पृष्टा सा सद्योजाता बाला पुन सस्मितं बभाषे तात सविस्तर मा मा प्राक्षी केवलमिदं ते निवेदयामि यहहं शुभा युष्मद्वेश्मनि गूढ स्थास्यामि तन्मां कस्मैचिदपि मा खलु दिया इति। तत कालक्रमेण नाम्ना सोमप्रभा सा दिव्यकन्या मर्त्येन वपुषा वासन्ती मधुमिव प्रफुल्लयौवनं सम्प्राप्य जातु हर्म्यपृष्ठगता वसन्तोत्सवयात्रां सानन्दमवलोकयन्ती तस्थौ तत्काल च सर्वाङ्गशोभिनी पुष्पधन्वसर्वस्वनीकाशा कुसुमस्मेराभिनवतारुण्योद्यानवल्लरी हृदयमुप युवजनवशीकरणौषधीमिन्दुमुखी ता यदृच्छयोद्वीक्ष्य सपद्युद्भिन्नचक्षूरागगाढरञ्जितहृदयो गुहसेनाह्वयस्य वणिजस्तनूद्भवो गुहचन्द्र कुसुमायुधकलम्बसन्निपातशतधाविदारितहृदयत्वादेकपदे समुल्लङ्घितमदनावस्थानवको दशम्यामवस्थाया मकरध्वजेन निर्दयमारोपितो

मोमूच्छ्र्यमानः प्रस्खलितगतिः कथमपि निजवसतिमियाय । ततो दूरीकृताहारं मनोभूजनितोन्मादमूर्च्छातुरं प्रज्वलितज्वरतातप्यमानत्वाच्छय्यायामितस्ततः परिवर्तमानं प्राणसदेहवर्तिनं वराकमात्मजं विदित्वा सहचरमुखोपलब्धतद्गतवृत्तान्तो गुहसेनो धर्मगुप्तगृहं गत्वा निजपुत्रकार्ये त दुहितर प्रार्थयांचक्रे सखे त्वत्कन्यादर्शनमात्रोत्पन्नतीव्रमदनज्वरसतप्तो मम पुत्रको जीवितसंशये वर्तते तदस्मै तां सकृपं दातुमर्हसीति । हे सुहसेन त्वं मूढ इव स्वप्नायसे क्व मे कन्येति तेन याचितो धर्मगुप्त उवाच । एव प्रत्याख्यातयाञ्चो स गुहसेनो मनस्यचिचिन्तत् स्वपुत्रीं निह्नुत्य कर्कशाशयो धर्मगुप्तस्तां दातुं नेच्छति तत् पुत्रप्राणपरित्राणाय राज्ञः साहाय्येन बलात्कारेणापि तां हस्ते करिष्यामीति तत्क्षणाद्राजानमुपेत्य तस्मै महामूल्यं रत्नमुपहृत्य च मनीषितमर्थं प्रश्रयपूर्वं व्यजिज्ञपत् ततोऽप्रतिमरत्नलाभतुष्टेन नृपेण सार्थवाहस्यास्य साहाय्यं कुर्विति तूर्णमेव समादिष्टं पुराध्यक्षमादाय पुनर्गत्वा धर्मगुप्तस्य वसतिगृहमायुधीयैर्नगररक्षिभिर्निरन्ध्रं प्रतिरुध्य भो भो धर्मगुप्त कण्ठगतप्राणाय पुत्राय कन्या देहीत्युच्चैस्तमामाचुक्रोश । भयानकशस्त्रपाणीनां नगररक्षानियुक्तमन्यानामतर्कितस्वगृहप्रतिरोधपुरस्सर प्रसह्य तनूद्भवामपहर्तुं चेष्टमानेन वणिजा गुहसेनेन नितरां निर्भर्त्स्यमानत्वात् कण्ठगतप्राणमिव निष्प्रभ वातुलमिव ससाध्वस वेपमानमपि सत्यसगरत्वाद् गृहीततूष्णीभावं पितर धर्मगुप्तं दृष्ट्वा सा दिव्ययोषित् सोमप्रभा तमभाणीन्मन्मूलको

नि.शेषकुलविनिपातो मा तावदुत्पादि तात परिणेत्रा गुहचन्द्रेण न कर्हिचिदपि मम वपु स्प्रष्टव्य नाह तेन साधारणमर्त्येन सहैकस्मिञ्छयने कदाचिदपि शयिष्य इति यावज्जीवमनपायिनी याथार्थिकी प्रतिश्रुति लब्ध्वा मा तस्मै काममोहिताय वणिक्सुताय दत्त्वेति । तद्वचसा युगपदुच्छ्वसितान्तरात्मा स सत्यसन्धो वणिग्वरो धर्मगुप्तो भो भो गुहसेन केय नि सत्त्वस्य ते विभीषिका यया स्तोकमपि नाहं विभीषित केवल स्वमनीषितार्थसिद्धये त्वादृशा. कदर्या. क्लीबा इव सत्त्वार्जवविहीना अन्यान् भाययितु सर्वसज्जनजुगुप्सितमीदृग्विध बलात्कार प्रयुञ्जते तथापि मदनार्त्या मुमूर्षोस्त्वदात्मजस्य दयमानोऽहं प्राणाधिकस्निग्धा दुहितर तस्मै दद्या ,विवाहदिवसात् प्रभृति यावज्जीवेन ते पुत्रहतकस्ता शरीरस्पर्शेन न खलु दूषयिष्यतीति प्र तिज्ञालेख दद्याश्चेदिति स्वीयवेश्मप्रतिरोधकस्य गुहसेनस्याभिमुखमाक्रुक्षत् तदनन्तर च मरणोन्मुखस्य पुत्रस्य जीवातुसमेन तद्वचसा प्रहृष्टमनसि तस्मिन् प्रतिज्ञापत्रे लिखित्वा समर्पितवति दिव्यकान्तिद्योतितविग्रहा सोमप्रभा तेन वणिक्पुत्रेणोदवोवहत् । ततोऽग्निसाक्षिक यथाविधि भूतलेऽप्सरायमाणामप्रतिद्वन्द्ववरवर्णिनी परमार्थत प्राणदा सोमप्रभा परिणीय स्वस्थीभूते तस्मिन् पुलकितवर्ष्मणि गुहचन्द्रे नवोढया तया साक स्वीय वासन्व्यमायाते वत्स चिरात्फलितमनोरथोऽसि वैवाहिकक्षणदा क्षणदामिमामपि यथातृप्ति सफलीकर्तुमात्मीया जाया सोमप्रभा तल्पेऽध्यारोप्य शेष्वेति निशीथे जनको गुहसेनो

निर्जरसमभिदधे। तस्मिन्नेव क्षणे कृतसविद्व्यतिक्रमस्य मायाविन एवंविधामपत्रपा गिरमुपश्रुत्य प्रतिज्ञाभङ्गजनितप्रचण्डामर्षानल-प्रदीप्तसभ्रूभङ्गमुखभीषणालोका सकलजगद्विध्वंसोत्सुकदानव-सूदनी चण्डीव चण्डी सा नववधू सोमप्रभा पश्यतस्तस्य पुरतः कृतान्तनिदेशाभां प्रदेशिनी चक्रवदविभ्रमत्। दृष्ट्वैव ता तस्या-स्तर्जनी मण्डलेन प्रचाल्यमानां सहसापक्रान्तचेतनोऽसौ व्यवहारकः साष्टाङ्ग दण्डवत् क्षितितले निपत्यापुनःप्राप्यैरसुभिर्व्ययोजि तथा च तत्रस्था गुहचन्द्रादयः सर्वेऽपरे दुर्निवाराभिस्त्रासोद्वेगाशङ्काभि समयोजिषत। एवमपमृत्युं गते जनयितरि तीव्रशोकावेगाविष्ट-मानस. स गुहचन्द्रोऽहो कष्टं दशाविपर्यासेन मदीयसदसि सर्वप्राण-हारिणी सर्वंकषा मारी तिष्ठतीति सनिर्वेद मनसि ध्याय ध्यायम-पदेवताया इव प्रशान्तचित्तोद्वेजयित्र्या न केवलं शरीरेण मनसा-प्यगम्याया. परकीययोषित इव स्वकीयभार्याया दर्शनमपि सर्वात्मना वर्जयन् गाङ्गेयो भीष्म इवोर्ध्वरेता भूत्वा सततमसिधाराव्रत ब्रह्मचर्यमाचारीत् किञ्च ध्रुवमैहलौकिकविषयसभोगे वीततृष्णो भूरिदक्षिणाभोजनादिदानेन सभाजनार्हान् द्विजातीननिशमतूतुषत्। अथैकदा वयसा विद्यया च वृद्धिं गत कोऽप्यागन्तुकोऽग्रजन्मा प्राज्या दक्षिणा ददती स्वर्वधूमिव नयनमुष मत्तकाशिनीं वाचयमा ता सोमप्रभा समुद्वीक्ष्य युगपदत्यद्भुततद्रूपसंपच्चमत्कृतमनाः सविस्मय तमूर्ध्वरेतसं गृहाश्रमिणं भो गुहचन्द्र केयं युवतिरतिमानुषवपुष्का-न्तिविच्छायीकृतपौर्णमास–सुधांशुमूर्तिर्लोकलोचनम् उपमदयितुमुद-

सुतरां विस्मापितमनसि तस्मिन् गुहचन्द्रे किं मया शशशृङ्गरूपः स्वप्न आहोस्विच्चेतोभ्रान्तिरनुभूयत इति मधुपरूपिणि सन्दिहति तया स्वर्वध्वा समं सौहित्यप्रदमाहारमानुगुणमाहारं प्राश्य सा शापच्युता त्रिविष्टपललना सोमप्रभा सस्मितदशनकौमुदीविकिरणेन ज्योत्स्नाशुभ्रामपि तां ज्योत्स्नीं समधिकं द्योतयन्ती सहचरि कोऽप्यतनुद्युतिमान् विप्रवरेण्योऽद्य प्राप्तोऽस्मद्गेहे तिष्ठति तत् त्वामापृच्छ्य साधयामीति निगद्य तां सान्द्रप्रणयपूर्वं परिरभ्य च तस्मान्महापादपादवरूढा यथागतं जगाम। तस्मिन्नेव मुहूर्ते तौ द्विरेफरूपिणावग्निदेवगुहचन्द्रावुत्पतिष्णू विहायसा पूर्वमागत्य समुज्झितषट्पदवेषौ यथापूर्वं प्रसुप्ताविव शय्यां निःशब्दं समाशिश्रियाते तदनु प्रतिनिवृत्ता वणिग्भार्या गर्भगृहं प्रविष्टा विदित्वा मूर्तिमान् स हव्यवाहनः किमद्राक्षीः स्वकीया जाया या शापवशाद् भुवमवतीर्णा स्वर्वधूः कथमिव मर्त्येन साधारणेन सजिगमिषते तथापि वात्सल्याद्धृदयवाञ्छितार्थसिद्धये तद्वशीकरणमन्त्रयुक्तीं तुभ्यमुपदिशामीति निगद्य तदनन्तरं तथा कृत्वा च प्रातस्तरां कुत्राप्यदर्शनमियाय। ततः उत्तरेद्युः कमलिनीविरहशोकादिव सहस्रदीधिता अस्ताद्रिशिखरमतिक्रम्य पश्चिमाकूपारे निमज्जति यथोपदिष्टं मन्त्रं जपित्वा कृतोल्बणकामुकवेषः कर्पूरमलयजमृगनाभिपरिमलावलिप्ताङ्गः कृपीटयोनिप्रसादेन यथाशीघ्रममिधाराव्रतं परितित्यक्षुः स तरुणसार्थवाहो गुहचन्द्रो निजगृहानीतया वारमुख्यया सह परस्पराधरोष्ठमधुपानं सस्पृहं कुर्वाणोऽरस्त तं च

तथाप्रवृत्तमन्मथकेलि निधुवनलोलुपमात्मनो भर्तारं साक्षान्निर्वर्ण्य सपदि समुत्पन्नानल्पेर्ष्याविमनीकृतमानसा प्रबलवैश्वानरमन्त्रोद्घाटितदीर्घकालवाचयमतामुद्रितवदना सा कृतोद्वाहाऽग्न्यद्यपूर्वमक्षतयोनिर्दिव्यकन्या तदीयभार्या सोमप्रभा सान्द्रजीमूततिरस्कृतचन्द्रबिम्बवद्भ्रूकुटिरचनादुर्दिनायमानमुखेन्दु-ससूचितोद्दामविप्रतीसारपुरस्सरं तं कामुकमुपांशु हे भर्त्तः परपुरुषासक्तया पांसुलयानया किं करोषीति सरोषमवादीद् यथा पश्यसि तथैवानया पीनस्तन्या वामलोचनया हृदिस्पृश सुरतसंभोगमुपबुभुक्षुरस्मीति तेन प्रयुक्ते च तां वारमुख्या युगपदपहस्तयित्वा सर्वदमपञ्चशरशराधिकबलीयांसि कटाक्षवीक्षितानि सविभ्रममभिवर्षन्ती हे प्रेयन् यथा ह्यहं त्वदीया जाया तथा हीदानीं यथेच्छं मामभिगच्छेत्युदीर्य तद्वचनप्रमुदितचेतसमूर्ध्वरेतसं वाससद्माभ्यन्तरमनैषीत् । इत्थमग्निमन्त्रवशीकृतस्वान्तितरा वृषस्यन्तीमस्पृष्टचरपरिणेतृगात्रसपर्कपुलकितवपुषमतिप्रमोदसामिनिमीलिताक्षीं तां सोमप्रभां रागोद्रेकात् क्रोडीकृत्य परमार्थतोऽतिशयितामृतरसमनसिशयसर्वस्वकल्पं तदीयपक्वबिम्बौष्ठरसमनन्ततृष्णादायिनं पायं पायं तदनु मा मेति मुहुर्मुहुर्हस्तौ विक्षिपन्त्यास्तस्या आप्रपदीनं शुभ्रवसनं कथंचिदपनीय चन्द्रिकादर्शितमनोमोहिपीनकुचकुम्भवलित्रयाङ्कितावर्तनाभिहस्तग्राह्यावलग्नपीवरनितम्बबिम्बमांसलरम्भोरु-सर्वाकारातिमनोहरं पाणिपीडनदिवसात् प्रभृति कालेऽनेकतिथेऽतिक्रान्तेऽप्यनवलोकितास्पृष्टपूर्वं दिव्याङ्गनायास्तस्या अहंश्रेयसपरस्परस्पर्धमान-

सकलललनाङ्गातिशायि वपुर्दर्शं दर्शं चित्रन्यस्त इव स्पर्शं स्पर्शं च सर्पिषा हविर्भुगिव दुर्निग्रहकामानलेन सधुक्षित. स ब्रह्मचारी गुहचन्द्रो मधुरकुहूरवसुभगा कोकिलाङ्गनामिव श्रवणसुभगरतिकूजितरमणीया प्रथममैथुनवेपमानवक्ष स्थलो रोमाञ्चितसर्वाङ्गसुन्दरी सुन्दरी ता गाढतरमालिङ्ग्य दीर्घकालीनमूर्ध्वरेतोभावमसिधाराव्रतेन साकमेकपदे जीर्णपटच्चरमिव समुज्झ्य तत. प्रभृति जिनभार्यया प्रेमरसतरङ्गिण्या सहवाससुखसंपदमतिप्राज्या सुचिरं निर्विवेशेति । एव कथाकथनकृतमुखेन वसन्तकेन कथितामभिरुचिररमनिस्यन्दिनी कथामुपश्रुत्य तुष्यन्ती निरन्तरकथाश्रवणाकृष्टमानसा सपद्मावती वासवदत्ता प्रीतिस्मेरा दृष्टिं तन्मुखे निपात्य त पुनरित्यम्यभाषिष्ट हे श्रुतिपेयकथामर्मज्ञ कथकानामग्रेसर भूयोऽप्यपरकथाकथनेन त्वत्कथारसिकानामस्माक मनासि प्रमोदय यदीच्छसीति श्रुत्वा सोऽप्युपाख्यानान्तरमुपवर्णयितुमुपाक्रंस्त—

प्राक्तने युगे बभूव किल महातपा· कालत्रयदर्शी भारद्वाजो गौतमो नाम मुनिसत्तमस्तस्य बभूवाऽहल्या नाम धर्मपत्नी ता च कदाचिद् दृष्ट्वा तद्रूपसपद्वशीकृतो दिवस्पतिः पुलोमजाजानिः पुरंदरो वृषस्यन्ती ता शरीरेणाभिजगाम ततश्च निजप्रज्ञाचक्षुर्विदिताहल्याश्रमगमव्यतिकरो ज्ञानचक्षु. स मुनिपुगव· प्रविश्य सपत्तिभूनं विस्यति तस्मिन्नागारे वृद्धश्रवसि मार्जाररूपं धृत्वा नि शब्द स्थिते कोऽत्र तपोवनाश्रमे तिष्ठतीति ता परिभ्रष्टशीला स्वैरिणी स्वजायामनुयुयुजे महामुने विडालोऽत्र तिष्ठतीति ससाध्वस तया

प्रतिभाषिते च भ्रूभङ्गधूमव्यक्तीकृतान्तर्ज्वलदमर्षधूमकेतु. सरोष-मौडुम्बरयष्ट्या त त्रासवेपथुविधुर क्रीडागोलकमिव संकोचितदेहं मूपकारातिमतिदृढ ताडयित्वा निस्त्रपे पुश्चलि विरलमनुष्यसचार-दुर्गमकान्तारनिवासिसीताजनिचरणसरोरुहसस्पर्शपर्यन्त सुदीर्घकाल शिला भव भो मार्जाररूप पाप शतमन्यो परस्त्रीलोलुपस्य शिश्न-देवस्य तेऽङ्गेषु सर्वत्र योनिसहस्र सजायता पुनर्यदा त्व विश्व-कर्मनिर्मिता सुरसुन्दरी तिलोत्तमा द्रक्ष्यसि तदा विमुक्तभग-सहस्रस्त्वं सहस्राक्षो भविष्यसीति सोपपति दुराचारा शशापैव स्वयमुप्तस्य दौश्चर्यबीजस्य ता फल प्राप्य साऽहल्या दुर्विपहदुर्गति-दोदूयमानमानसा वज्रलेपकठोरा शिलावस्था प्रपेदे तत्क्षणात् सोऽपि दिवौकमामधीश्वरोऽपि भूत्वा सुनासीरो रतिकुहरसहस्रलाञ्छित-दुर्दर्शनाकृति सन् परेषा हास्यास्पद सववृतेऽयि देव्यौ सुकृतै सौभाग्योदयो दुष्कृतैश्चैव दौर्भाग्यविनिपातो महद्भिरप्यनुभूयते तज्जन्मान्तरपरस्परानुरक्तयो सोदरयोर्दिव्यप्रमदयोरिहलोके शाप-भ्रष्टयोर्युवयोर्देव्योरपि शाश्वती ममा सौभाग्यसंपदो भूया-सुरिति। श्रुत्वा तद्वच प्रमुदितमानसे वत्सराजसपत्न्यौ वासव-दत्तापद्मावत्यौ भविष्यत्काले मनसि कदाचिदपि जनिष्यमाणमन्यो-न्यस्योपरि मत्सरगन्धमपि परिहर्तु मनो ववन्धतु ! तत काले-ऽल्पीयसि व्यतीते प्रतीहारप्रेषितो नामवदनो वत्सराजमुपयन प्रणम्य देव न स्वामी मग यमुथराधिपतिर्महाराज. प्रद्योतस्त्वा समादिशति यदस्मदीयौरसपद्मावतीप्रतिसदेशाविगतत्वद्गताखिल-

वृत्तान्तातिमानसंतुष्टा वय तयो कलहहेतुकेर्ष्याविवर्जितमिथः-स्नेहादरैकीभूतमनसो सपन्न्यो सुदृढबद्धगमानभावस्य तव राज्याभ्युदयमेव कामयामह इति तस्मै सदेश विश्राणयाञ्चक्रे तदनु च वत्सराजेन भूरिप्राभृतातिसर्जनेन सत्कृते तस्मिन् दूते प्रस्थितेऽवन्तिभूभर्तुश्चण्डमहासेनस्य वाचिकहरोऽप्यागत्य यथाविधि विहितप्रणति सन् तमुदयनमभिवभाषे राजन् कृत्स्नराजकचूडामणिरोचिष्णुरुचिसततलालितचरणरक्ताम्बुजोऽप्रतिद्वन्द्व-महाविक्रमोत्साहशक्तिसम्पन्नो दीर्घदर्शी प्रज्ञावता पुरस्कृतः क्षितिभृदधिपश्चण्डमहासेनो मन्मुखेनेद ते सदिशति यदस्माक वात्सल्यपात्रस्य वासवदत्ताया. साहाय्येन मन्त्रिपुरोगयौगन्धरायणप्रज्ञानिष्पादितं ते प्रद्योतात्मजापरिणयोदन्त परिज्ञाय हृदि निरुपमा संतुष्टिः संजायते विशेषतस्त्वद्धितकाम्यया नस्तनूजा दुष्करमपि यत् कार्यमन्वस्थात् तेन सुतरा प्रीता. स्म पुनर्यथा वासवदत्तासमाया पद्मावत्या न स्नेहो वर्तते तथैव तत्राप्यस्तु सप्रति च पार्ष्णिग्राहे युक्तितो मित्रीकृते सति यौगन्धरायणप्रोत्साहवचनानुरोधात् पृथ्वीसाम्राज्यावहो दिग्विजयोद्यमो यथाबल विधीयतामिति। एवविध सदेशहरमुखात् सदिष्ट श्वशुरवाचमाकर्ण्य प्रीतिप्रमोदविकसितस्मेराननो वत्सराज उदयन मत्रावनी दवी वासवदत्तासनाथमौढराज्यभार सचिवसत्तम यौगन्धरायण च यथासम्मानाद्विकलातिथेयसन्मानविधिप्रहृष्ट त दूतमुज्जयिनी प्रतिगमयामास।

# (१०) विदूषककथा

अथ कदाचिदनारतपद्मावतीवदनकोकनदमधुपानपुलकितवर्ष्मणि स्पृहणीयवासवदत्तावक्षोरुहविहृतिपीयूषधारासंसिक्ते नृपतावुदयने सर्वास्थानसभामण्डपसमाश्रिते यौगन्धरायणादीनां राज्यधुरधराणां सन्निकर्षे प्रतीहारानुमतान्तः प्रवेशोऽविरताश्रुधारासततिस्नपितप्रबलरुदितोच्छूनाक्षः कोऽपि मध्यमवयस्को वाडवोऽप्यवाडवस्तदुपकण्ठमुपेत्य दीनवत्सल निःशरणशरण राजन् अहो अब्रह्मण्यमब्रह्मण्यमेकपुत्रस्य मम पुत्रोऽद्य कानने दुरात्मभिराभीरैर्निष्कारणं चरणेन विनाकृतो जीवितसंशये वर्तत इति सनिर्वेदं विज्ञाप्य मुक्तकण्ठमक्रन्दीत्। सानुक्रोशमाकर्ण्य तद्विज्ञप्तिं परदुःखदुर्मनायितमना उदयनस्तूर्णं योद्धृभिः काश्चित् तरुणाभीरान्जीवग्राहं गृहीत्वानाय्य च तानजातश्मश्रून् सरोषमप्राक्षीद् रे रे महापाप्मानः के यूयं किमर्थमस्य विप्रवरस्य युष्मद्वरिवस्यार्हस्य देहजस्य पादपरिच्छेदं निकृष्टकिल्बिषमकार्ष्टेति। आयुष्मन् वयमाभीरजातीया अरण्ये विहरन्तो निवसामोऽस्माकं मध्ये देवसेनो नाम गोपालकः कृतकराजः शिलामयभद्रासने समासीनः कान्तारराज्यं प्रशास्ति तदाज्ञावशंवदेषु सर्वेष्वस्मासु न कोऽपि तस्य प्रशासनं व्यतिक्रमितुमुत्सहतेऽद्य तु दैवाद् विप्रबालकस्तेनैव पथा

प्रचरंस्तत्रोपविष्ट राजान देवसेन दृष्ट्वापि न प्रणनाम भो दुर्विनीत कथमस्माकं राज्ञे प्रणतिमकृत्वा नावहेल गच्छसीत्यस्माकमाक्रोश-वामप्यसौ बटुकः सोपहासावधीरितास्मद्वचनोऽग्रेऽद्रुद्रुवत् तत्क्षण च तत्परीभवकुपितेन क्ष्माभृता देवसेनेन झटिति समादिष्टा वय त प्रधावन्तमवष्टभ्य तस्याग्रिच्छेदेन यथायथमदण्डामहि तदत्रा-युष्मान् देव एव प्रमाणमिति ते गोपालका प्रत्यवादिषु । इत्येवं तैराभीरबटुभिर्विज्ञप्ते महीभुजि विमनस्के सति सूक्ष्मदृष्टिर्मन्त्रि-प्रग्रहरो यौगन्धरायणो देव नि सदेहमत्र मनश्चमत्कृतिक्षमं विपुलं कारण भवेदन्यथा कथमाभीरबालक कृत्रिमराजो भूत्वा देवसेनोऽरण्यराजायते यत्र शिलापीठेऽसौ समुपविष्टस्तत्र किमपि कौतुकमदत्र ध्रुव निहित स्यात् तदधुना तत्रैव गत्वा भूमिपरीक्षा कुर्म इति वसुधराभर्तुरदयनस्य कर्णे रहोऽजल्पीत् । तदाशु श्रुत्वा तद्गिरमलघुकौतूहलावर्जितमतिर्वत्सराजोऽपि तथेति प्रोच्य ततो ब्राह्मणाभिमुखमवलाम्य मा भूसुर यद्यपि वय चरणनिकर्तन-विपद्गत भवदीयमौरसमनिबेलमनुकम्पामहे तथापि कात्र प्रति-क्रिया प्राप्तकाला विधातव्यास्माभिरिति सन्देतासि दोलायन्ते यथा ये कृत्रिमनृपस्यापि नृपस्याज्ञान्धीभूता अतिमुग्धा अनुद्भिन्न-श्मश्रवो बालका तानेतान् कथ निग्रहीतु शक्नुयाम भो द्विजन्मन् नूनमेतान् प्रति प्रसाद भजस्त्वोदारधीस्त्व सिद्धात्र वतसे यावज्जीव ते तनूद्भवस्य जीवनमात्रार्थे पर्याप्त हिरण्य ददृ गृह्णीष्वेति भूरि-द्रव्योपहारेण त सान्त्वयित्वा च ततः सन्नद्धस्वानुगतसैनी-

पालकैर्दर्शितवर्त्मा यौगन्धरायणप्रभृतीन् महामात्रानादाय शुभ्रहयारूढस्तत्र द्रुतमियाय । मान्द्रवनस्पतिराजिनीरन्ध्र तदरण्य समासाद्य विचित्रभूमिलक्षणज्ञेन योगन्धरायणेन परीक्ष्य निर्दिष्टे क्षितिप्रदेशे राजयुध्वभिश्चिर निखन्यमाने क्ष्माकुक्षित पङ्किलशिलामयबृहदाकृतिर्धन ानुचरो यक्षोऽनर्कितमेवाविर्बभूव निमेषान्तरे चैवमुदयनमभिबभाषे हे वत्सभूमीन्द्र धन्योऽसि येन त्वमिदानीं स्वपूर्वजयुधिष्ठिरनिहितमतिवस्न महानिधिमवाप्नोषि यमह पर शतसमास्त्वदर्थे सावधान पर्यरक्षिपमुररीकुरुष्व पितृपैतामह महार्घ्यमिद निधिरत्नमिति । तद्वच. श्रवणप्रहृष्टमना. सौभाग्यवान् नरेश्वर उदयनस्त गुह्यक यथार्हसत्क्रियाविधिपूर्वक सभाजयित्वा तस्मिन् क्वापि तिरोहिते प्रचुरहिरण्यमणिसचयोपेत सौवर्णरत्नसिंहासन पाण्डवीयमादाय राजधानी सहर्ष प्रत्याजगाम ततश्चामूल्यनिधिरत्नप्राप्तिप्रासङ्गिक महामह कारयित्वा पर शतमहस्रवैजयन्तीसौदामनीसमाकुले नभसि महोत्सवप्रमुदितपौरजानपदाभिहनमृदगादिनानाविधवादित्रध्वनिसहचरे च सगीते बधिरीकृतसमस्त ककुबन्तराले वारिवाहो वारीव हिरण्यराशि भृत्येषु सानन्दमभिववर्ष । ततो वत्सभूपालाशयविविदिषया बुद्धिमता प्रवेका योगन्धरायणो महाराज ननु जनस्य भाग्योदये शुमङ्करकल्याणपरम्परा समुत्पद्यते पूर्व वासवदत्ता तदनु पद्मावती साप्रत तु यौधिष्ठिर सिंहासन त्वद्धस्त दैवत आगत देव दिष्ट्या वर्धसेऽधुना त्वया सुचिरात् प्राप्तमिद पितृपैतामहमत-

नुजाम्बूनदरत्नप्रभाप्रभास्वर सर्वलोकातिदुष्प्राप भद्रासनमुपवेशनेन समलङ्क्रियतामिति शुभयुभाग्योदयनमुदयनमब्रवीन्निशम्य च तद्वाक्यं तेन प्रत्यवादि सखे समञ्जसमिव त्वयोक्त तथापि कथमिव दिग्विजयानात्मसाकृतविपुलपृथ्वीमण्डलेन केवलवत्सभूभागाधिष्ठितेन निस्त्रपेण मया चक्रवर्तिसमुचितमेतद् रत्नसिंहासनमुल्लङ्घितु शक्यते शृणु सखे पुरा सर्वानमित्रान् दमयित्वा कृत्स्नमेदिनीविजयानन्तरानुष्ठितराजसूयो दिक्षु सर्वासु प्रथितमहायशाः कुमुदबान्धवान्वयललामभूतो न परमपूज्य पूर्वजो वृकोदराग्रजो धर्मराज इदमात्मानुगुण सिंहासनमधिरुह्य यथान्याय पृथिवीसाम्राज्यं प्रशशास तस्मादहमपि जलनिधिमेखलामनल्पवसुदा वसुधा साकल्येन विजित्य भद्रासनमिदमलकरिष्यामीति । एवकार विवेकदृश्वना वत्सभूभर्त्रा व्याहृतामतिप्राप्तरूपा भणिति प्रीतिपूर्वकमनुश्रुत्य परितुष्टोऽसौ सचिवप्राग्रच सस्मितं त पुनरवदत् तर्हि दिवस्पतिपुरुहूताधिष्ठिता सुरनिम्नगाप्रवाहपावना लोकलोचनोदयसततद्योतितालोका प्राची ककुभ पूर्वमात्मसात्कर्तु प्रयतस्व तत क्रमान्महातेजोभिरप्रतिमपुरुषकारैस्त्वदीयपूर्वजैः कृतवसति गजासाह्वय प्राप्य सकललोकजिष्णुश्चक्रवर्ती भवितुमर्हसि यथा युधिष्ठिरप्रभृतयस्ते पूर्वजा अपि हस्तिनापुरमाश्रित्य निखिलदिक्चक्र विजिग्यिरे केवल त्वदीयः पितामहः शतानीकस्तु प्रकृतिसुषमारञ्जितहृदयत्वादिमा कौशाम्बीं राजधानीमकरोदिति। देशविशेषगौरवमपश्यैव समुदीर्य तस्मिंस्तूष्णीभूतेऽर्णवाम्बरविश्व-

भराविजय प्रज्ञापुरस्सरपौरुषायत्त प्रतीत्य विक्रमगौरवपक्षपाती मतिमतां वरेण्य उदयनस्तु देवीभ्यां सह सर्वेषु सुहृत्सु दत्तकर्णेषु साधुवादपुरस्सरमिति प्रतिव्याजहार सखे युक्तरूप त्वया प्रोक्त परन्तु कथस्विद् देशनियममात्र सार्वभौमताकारण स्यान्मनोऽनुकूले कृतान्ते प्रसीदति पुरुषकारेणाकुण्ठितेन पुंसा सपदादिक समीहित सर्व साध्यते समाश्रयणीयदेशविवर्जितोऽप्यूर्जस्वलसत्त्वसपन्न पुमान् विपुला श्रिय हस्ते कुरुते किं पौरुषनिदर्शनरूपा वीरकथैषा यौष्माकीणश्रुतिविषय नापतितपूर्वा, प्रभोऽप्यपूर्वमस्माभिर्नाश्रावि तदायुष्मान् कथयत्विति सखिभिस्तै प्रार्थितश्चासावद्भुतवीररस-निर्झरिणीमिमा कथामुपवर्णयितुमुपचक्रमे । अस्ति समुपेक्षितकैलासनिलयमहाकालकृतशाश्वतिकनिवासोपलब्धपुण्यतीर्थताकीर्तिविराजितपवित्रालोका नीलमरकतस्फटिकशिलाखचितशातकुम्भखर्जूरकर्बुरवाकचक्रयचटूल्लोलपर शनाभ्र लिहहर्म्य–मालाविच्छायीकृत-दिविष्ठामरावती वाणिज्यसंपत्तिसमृद्धविपणिमहस्रन्यस्तविद्रुम-शङ्खमौक्तिकदाम्तपनीयरजतपद्म–रागहीरकनीलमणिवैदूर्यादिबहुविधरत्नमयाङ्गभूषणकदम्बकविलोकनमात्रमिथ्यावितर्कितवसुधरा-रत्नाकरकुक्षिशून्योभावा दुरधिगमागमशास्त्रार्थविवेचनातत्परवि-द्वत्कुलसकुलनख्यातीतविद्यामन्दिराधिगतबहुमाना लोकपूणसरसीरुहपरिमलवाहिशिप्रासरोवरोत्थतरङ्गिणीसमीरणापनीयमानप्रण-यिमिथुनोद्दामानङ्गकेलिजनितपरिश्रान्त शश्वच्छान्तिमयीव मन्मथयुद्धनिरतकामिद्वन्द्वकेशग्रहवर्ज कलहजकेशग्रहाविज्ञसदाचार-

भूषणभूषितनिवासिलोका सुनीतिरिव राजन्वद्राज्यरञ्जितप्रजासमूहा महापुर्युज्जयिनी नाम यत्र प्राक्तनकाले बभूव विश्रुतपुण्यकीर्ति सार्वभौम आदित्यसेनो नाम प्रतापवान् यस्य महानुभावशालिनो नानाजनपदागतानुजीविसामन्तनृपनिवहमौलिमणिकिरणारुणितचरणयुगलस्य नितान्तप्रज्वलितेन प्रतापानलेन तिग्मांशुरपि मन्दीभूतप्रताप इव ददृशेऽमित्राणा च हृदयानि तीव्रहृच्छूलाभिभूतानीव भृश चकम्पिरे यदीयेन च तुषाराधिकशुभ्रेण वितातपत्रेण मुषितप्रसन्ननीलिम विहायोऽपि किल धवलीबभूव । अथ जातु पौरजानपदकार्यविक्षणार्थं सर्वास्थानगते तस्मिंस्तपनतेजसि चक्रवर्तिनि कश्चिन्महाधन सत्कुलोत्पन्नो नगरोपकण्ठवास्तव्यो गुणवर्माभिधो द्विजाति समस्तकन्याललामभूता प्रत्यग्रयौवनोद्यानप्ररूढहृदयङ्गमतनूलतामात्मसभवा नाम्ना तेजस्वती तेजस्वतीमाकृतिसुषमा जुषमाणा समादाय तमादित्यसेन राजाधिराज समुपेत्य बद्धाञ्जलिविहिताभिवादन सन् महाराजाधिराज शुभभाग्याभ्युदयप्रसादिते मामकीने कुले सजात त्रैलोक्यदुर्लभ कन्यारत्नमभिनवतारुण्यविकस्वर भवद्धस्ताम्भोजे सस्नेहमुपहर्तुमानीतवानस्मि तदेना मदीयनन्दिनी त्वदीयनयनानन्दिनी सर्वेषा महार्हाणा रत्नाना विभुस्त्व गृहाण यथेदृशो युवधूसमकान्तिर्लोकोत्तरवरवर्णिनो विना त्वामन्यत्र समर्पयितु न खलु शक्यते कुत ईदृग्रूप योषिदन्तर पुन सभवितुमर्हतीति निगद्य ससतोष ता तस्मै दर्शयाम्बभूव । एव जनके-

नोपायनीकृता भूतलेऽप्सरायमाणां सहजदेहद्युतिदीपितास्थानान्तराला मनोहरसुरतदीपिकामिव तेजस्वतो ता पुरत. साक्षात् कृत्वा सर्वाकाराभिरुचिरतदीयवपुर्द्युम्नसमालिङ्गितो द्रवीभूतहृदय इव सपदि प्रबुद्धमनसिशयपौष्पबाणशरव्यभूत स सार्वभौम आदित्यसेनोऽतृप्तदृष्टिसुधाधारा रागलज्जान्तरालवर्तिनी सुतनुं समुपजोषमङ्गीकृत्य कतिपयैर्दिवसैस्तामात्मानुरूपा महिषीपदवीमारोप्य सुविहितकौतुकमङ्गलपूर्वकमुपयेमे तत भृति रोहिणीसंगतोऽमृतदीधितिरिव तेजस्वतीसगमरोमाञ्चितवर्ष्मा स आदित्यसेनस्तदधरमधुपानपरिरम्भणतत्परत्वात् सर्वथा विस्मृताहोरात्रतारतम्य. समुज्झित-राज्यकार्योऽनाकर्णितविषण्ण-प्रजागणाक्रन्दनस्तृणीकृत-मौलमन्त्रिवर्गहितोपदेश सन् बहुतिथकालाध्युषितादपि शुद्धान्तात् कर्हिचिदपि बहिर्न निर्जगाम। ततोऽल्पीयसि काले व्यतिवाहिते प्रियतमाया तेजस्वत्या रागरज्जुसदानितमनसस्तस्यादित्यसेनस्य लोकलोचनकृष्णसारवागुरा प्रसूसमानकान्तिशोभिता कन्यका समुत्पेदे तत्समकाल च मनसि विजिगीषापि तथा पूर्वा तस्य हृदि संप्रमोदमुत्तरा तु भुजयोर्वीर्यं पृथग्जनयामास। अत्रान्तरेऽसौ प्रबलबलमदोन्मत्तो दुरात्मा तीव्रावेगकुसुमायुधशिलीमुखविषमोहितत्वान्नि सीमस्त्रीसुरतव्यसनाभिनिवेशनिश्चेता आदित्यसेनो राज्यभारोद्वहनमपि कात्स्न्येंन विस्मृत्य नक्तदिव नवपरिणयया भार्यया ररम्यमाण आस्ते तदह लब्धावकाशो मदनक्रीडानिषेवणप्रसक्तिनिष्प्रभीभूतप्रतापानलस्य नृपकीटस्यास्य दुर्विषहाद् वशा-

दात्मानं ध्रुवं विमुच्य चिराभिलषितस्वातन्त्र्यपीयूषरसं यथातृप्ति पुरा समुपभुञ्ज इति मनसा कृत्वा दुश्शासनप्रकृतिप्रकोपं प्रचुचोदयिषुमभिषेणयन्तमभिमानदर्पितमेकतमं सामन्तं परिज्ञाय सहस्रचारचक्षु सार्वभौम आदित्यसेन सुखसुप्तप्रबुद्ध इव जिगीषाद्विगुणीकृतोत्साहशक्तिपुनःसंधुक्षिततपनप्रतापज्वलनो भूत्वा तमनुजीविनं दमयितु विजयाधिदेवतामिव मदोत्कटमतङ्गजपृष्ठाध्यारोपितां सहचरी महिषी तेजस्वती पुरस्कृत्य सन्नाहसज्जितचतुरङ्गाविकलाङ्गवाहिनीसमुत्थापितनिविडधूलिपटलविवर्णीकृतसहस्रांशुबिम्बोऽतिभृशबधिरीकृत-समस्तदिङ्मुखैर्जयमङ्गलकोलाहलैरभिष्टूयमानः स्वयं वाताश्वमारुह्य दण्डयात्रा चकार। ततः कियद्दूरं गत्वानुच्चावचे भूतले स क्ष्माभृदधिराज आदित्यसेनः सहजश्रीवृक्षलाञ्छितभालवक्षःस्थलं सजीवाचलसंकाशप्रांशुकायमाप्रोथोन्नमितपूर्वचरणाभ्यां वायुवर्त्मनि वायुवेगस्य पतत्रिराजवैनतेयस्येवात्मनो जवनगतिं ह्रेषितेन सम दर्शयन्तमेषा मही समीरणातिगस्य मे वल्गिताय किंस्विदलमिति सदिग्धमतिमिव दृश्यमानं निर्मलतुहिनसवर्णं वस्तुतो मनोजवमात्मीयं हयोत्तममौपवाह्यारूढाया देव्यास्तेजस्वत्या सकौतुकं पश्यन्त्या पार्ष्णिघातेन प्रेरयाञ्चक्रे तस्मिंश्चैव निमेषे तत्पार्ष्णिप्रहारमन्युद्विगुणितवेगः सोऽपि सप्तिः कठिनलोहतीक्ष्णाग्रं शफैः क्षितितलमनपराधमपि निर्दयं निघ्नन्यमानोऽन्तरीक्षमुत्पतन्निव पृषदश्वातिशायिना रहसात्यद्भुतेन मङ्क्षु वल्गज्जनलोचनगोचरात् कुत्राप्यदर्शनं ययौ।

इत्थंकारं वाताश्वेन सहसापहृते नृपतौ तथाकाण्डकुलिशनिर्घात-प्रतीकाशेनाकस्मिकेन व्यतिकरेण मुषितचेतसि मन्त्रिवर्गवाहिनी-पतिप्रमुखे सैन्यलोकेऽतर्कितोपनतविपद्विषण्णे जवनाश्वीयानि तेनैव तुरंगमेण गतां ककुभमुद्दिश्य तरसा सर्वेण तूर्णमनुदुद्रुवुस्तथापि दृष्टनष्टामिवापदेवतां क्वाप्यन्तर्हितं तं वाजिहतकं नासेदुस्ततो मोघीभूतनृपपरिमार्गणोद्यमेषु तेष्वश्वीयेष्वधोमुखीभूय प्रतिनिवृत्तेष्वशुभशङ्किता सेनानीसमन्विता अमात्या अचिंतितभर्तृ-विश्लेषदुःखितामनारतं शोकावेगाद्रोरुद्यमानां महिषीमग्रे कृत्वा वाहिन्या साकमुज्जयिनीं सखेदं प्रतिजग्मुः । अथ तेन सदागति-गतिना शुभ्रवीतिना कालेनाल्पीयसा नीरन्ध्रपर्णराशिप्रच्छादित-तुंगभूरुहपंक्तिसहस्रसबाधं प्रविरलमनुष्यसंचारं भयानकहिंसारुनि-कुरुम्बसमाकुलं विन्ध्यकान्तारगहनं विस्मयोद्भ्रान्तमना अपि पतनभयादश्वपृष्ठगाढतरासक्ताष्टांगोऽसौ वसुधाधिपोऽपि तपस्वी प्राप ततश्च केनापि कारणेन सपदि मनोजवां गतिं मन्दीकृत्य तत्रैव तस्मिन् वाजिनि तिष्ठति सोच्छ्वासमवरुह्य हयलक्षण-शास्त्रवित् स आदित्यसेनस्तस्य सैन्धवस्य मूर्धानं प्रीतिपूर्वं स्पर्शं स्पर्शं भोस्तुरगोत्तम पूर्वस्मिञ्जनुषि दिविषद् बभूविथ त्वमिह जन्मनि तु शापभ्रष्टः सप्तिभावं ग्राहितोऽसि कथमिव दैवत-जातीयो युष्मादृशः स्वामिद्रोहं मनसापि कर्तुं शक्नोति तत् त्वं शरणं मामशरणं शुभयुभिः पथिभिः पुनरुज्जयिनीं प्रापयेति तं ययाचे । आकर्ण्य तत्प्रार्थनावाक्यं जातिस्मरो भूत्वा पश्चात्ताप-

परितप्त. स घोटकसत्तमो मन्दशिर.कम्पेन तत् प्रतिपद्य तस्मिन् नृपे स्वपृष्ठ पुनरध्यारूढे यथागत योजनशतविप्रकृष्टमन्तरमध्व-परिश्रमापनुदशीतलवारिबहुलसरोवरसामिप्यवर्तिना शुभेन पथा समतिक्रम्य झञ्झावातातिगेन तद्रहसा तिरस्कृतानात्मनः सप्ताश्वा-नवलोक्य सजातापत्रप इव सप्ताश्वेऽरुणसारथावस्तमिते ततः प्रदोषे राजधानी समासाद्यापि सुदृढार्गलितद्वाराणि प्राकारगो-पुराणि वीक्ष्य चैकरात्रनिवासार्थं पर्यारोपविष्ट राजान नगरी समया कृतस्थितिं मठायतन सवितर्कमुवाह । त मठालय क्षपा-क्षेपणक्षम मत्वा स महीभुगधीश्वरो यावत् तत्र प्रवेष्टु प्रचक्रमे तावदभ्यन्तराद् युगपन्निर्गता दुर्बोधवेदाध्ययनजडीभूतविवेकाः पडितमन्याः श्रोत्रिया दीर्घाध्वधूलिपटलधूसरविग्रह परिश्रमातुरं प्रतिश्रयार्थिन सान्द्रपाशुपुञ्जचोरितसहजधवलिमहयारूढमादित्य-सेन सशक दृष्ट्वा कोऽप्येष रात्रिचरो राक्षस उताहोस्वित् पश्यतोहरः स्यादिति मत्वा भो भो त्वया न प्रवेष्टव्य न प्रवेष्टव्यमिति सावलेपमुच्चैस्तरामाचुक्रुशु. । तस्मिन्नेव मुहूर्ते श्रवणकटुकलकल-शब्दसहसाविबोधितः साङ्गवेदप्रमुखसकलशास्त्राकूपारनिष्णात-विपश्चित्कुलालकारचूडामणिरपि दुश्चरतपश्चर्याप्रीणितहव्यवाह-नोपलब्धदिव्य-कौक्षेयकसमधिकोपबृंहिता-कुतोभय-सहजभुजवीर्य-शाली सौजन्यार्जवमयत्वाच्छरणार्थिने दीनलोकेऽक्रूरोऽपि पापलोके क्रूरो गुणवता पुरोगो विदूषकनामा श्रोत्रियग्राग्रहरः क्षिप्र निर्गत्य तैर्ब्रह्मबन्धुभिरपमानित द्वारि स्थित सान्द्ररेणुरूषितमपि सौम्या-

कृति महातेजस तमुद्वीक्ष्य कोऽपि महानुभावोऽय भवेदिति सप्रधार्य कर्कशाशयास्तान् सर्वान् ब्राह्मणब्रुवान् कूर्पराभ्यामपसार्य परिश्रान्तालोक तमभ्यन्तर सानुकम्प प्रावीविशत् ततश्च तत्कालयोग्यस्नानाहारशय्याकल्पनै प्रच्छन्नरूपमप्युपचार्य नमादित्यसेनं प्रश्रयणपूर्वमुपाचारीत् तदनु पर्याणादिकमपनीय पाशुमलीमसकायं तदीयवाजिनमपि स्वच्छेन द्रोणिजलेन क्षालयित्वा घासधान्यार्पणेन सुतरामतूतुपत् । प्रतिनिवृत्य भुक्ताशन वीतक्षुत्पिपास त तेजस्विनमभ्यभाषिष्ट महाभाग यथासुखमिदानी शेष्वेति तत्क्षणे च परिक्लेशोन्मीलितनिद्रानिमीलितलोचने तस्मिन्नध्वगे प्रसुप्ते तदीयशरीर रक्षन् ध्यानमात्रोपागत दिव्यकरवाल हस्ते धृत्वा द्वारिस्थ. स विदूषको जागरणेन कृत्स्ना ता विभावरीमतिवोवहत् । अथ प्रभाताया रजन्यामनुरक्तकमलिनीपुन समागमरागारुणे दिनकरेऽशुमालिनि पूर्वदिङ्मुख भासयति सदाचारभूषण. सतामग्रेसरो विदूषकस्तस्मिन् पथिके प्रबुद्धे बहिर्गत्वा सुखशयितोत्थित तं वीति कविकापर्याणादिकारोपणेन प्रयाणसज्जमकार्षीत् । तत. कृतस्नान. स सार्वभौमः सौहार्दनिधि त विदूषक स्मितिपूर्वमापृच्छ्य तुपारसमद्युतिविराजितसैन्धवोत्तमारूढ सन्नुज्जयिनीं प्रविश्य राजमार्गे सम्भूयोपस्थितानां प्रमुदितपौराणा नयनोत्सवं ददत् सहर्ष प्रत्युद्गतैर्मन्त्रिमहामात्रै कृतानुयात्र प्रेयस्यास्तेजस्वत्या वासन्तीप्रसूनसुकुमाराद्धृदयाच्छल्यमपनयंश्च निजप्रासाद प्राविक्षत् । तस्मिन्नेव वासरेऽक्षतशरीरस्यादित्यसेनस्य शुभागमनसमान-

नार्थमेव महिषीमन्त्रिसुहृद्भी राजकुलनिवासिभि. प्रवर्तिते महोत्सवे कृतज्ञश्चक्रवर्ती स आदित्यसेनो विदूषकप्रभृतींस्तान् सर्वान् मठायतनवास्तव्याञ्झटिति समाहूय सर्वास्थानमण्डपे कृतोपस्थितिषु तेषु श्रोत्रियेषु सर्वेषु चान्येषु श्लाघवादपुरस्सर सकौतुकमाकर्णयत्सु यथासवृत्त रात्रिवृत्तान्तं कथयित्वा तस्मै सुकृतिने विदूषकाय ग्रामसहस्रमतिसृज्य सामन्तसमानसमानानुसूचकातपत्रवाहनसमन्विताया प्रधानराजपुरोहितपदव्या तमुपकारिणमधिष्ठाप्य च भृश सपूजयाञ्चकार। एवं निर्व्याजोपकारेण नितान्तसंतुष्टेन क्ष्माभृता कृतज्ञतापूर्वं यद् व्यश्राणि तदग्रहाराणा सहस्रं जलनिधिवद्विशालौदार्यनिधि पुण्यकर्मा विदूषक सर्वेभ्यो मठनिलयेभ्यो ब्राह्मणेभ्यो दत्त्वा तेषा साधारणस्वाम्येऽतिष्ठिपत् ततश्चानुजीविसामन्तसमानभावं प्रधानपुरोहितपद समाश्रित्य भूपतिसेवापरायणस्तमादित्यसेन चेतसातन्द्रितेन यथाशक्ति सम्यगुपसेवमान: कर्तव्यान् नियोगान् दिवारात्रमन्वस्यात्। एवमविश्रान्त याति काले सवत्सरेषु बहुषु व्तीतेषु पूर्वं मेदिनीश्वराल्लब्ध पश्चादुदारधिया राजपुरोधसा विदूषकेन स्वयमात्मसादकृत्वा साधारणस्वापतेयीकृत समग्रग्रामसहस्रमुपभुञ्जाना धनाढ्यभूता अपि नितान्तोच्छृङ्खलतृष्णान्धीभूतमानसा कुक्षिभरयस्ते ब्रह्मब्रुवा ग्रामसमुदायस्वाम्यं बलात्कारेन जिघृक्षव समस्ताग्रहारसहस्रमेतन्ममैव भवत्यहमेवास्य स्वामीत्यहमहमिकया ग्रामलुण्ठनेऽनिशमन्योन्य व्यवदिषत। एवकारमनारत कलहायमानास्तान् ब्रह्म-

बन्धून् प्रति सततमौदासीन्यमाश्रिते सुमनसि विदूषकेऽथ कदाचि-
दृजुस्वभावो दुर्वासा इव क्रोधालुश्चक्रधराभिधो विप्रवरस्ताञ्छ-
श्वद्विवादमूर्च्छितविवेकान् विश्रृङ्खलाहङ्कारदूषितान्तरात्मनो
दुरात्मनो दृष्ट्वा सरोष धिग् मठाश्रितकीटान् परदत्तलक्ष्मीविमूढान्
युष्मान्श्रोत्रियपाशानित्यादौ धिग्दण्डेन तान् दण्डयित्वा चैवम-
भाणीदकिञ्चनैरकिञ्चित्करैरकिञ्चिज्ज्ञै परोपहृतभिक्षापरिपोषि-
तैरुदरंभरिभिर्युष्माभिर्विदूषकप्रसादोपार्जिता या लक्ष्मी लब्धा ता
किमर्थं विध्वंसयितुमुत्सहध्वे स्थानमेकपि मूढस्त्रीनेतृक स्तनधय-
नेतृकं वा वरमथवानेतृक वर न तु विभिन्नमतिबहुनेतृकमेककर्ण-
धारा नौका निर्विघ्न पारावार तरेत् परन्तु बहुकर्णधारा नौः
समुद्रे विप्लवेत यदि यूय ग्रामसहस्रप्रसूतफलोदय शाश्वतिक कालं
समुपजोषमुपबुभुक्षथ तर्हि समग्रग्रामस्वापतेयपरिपालनालंभूष्णु
सत्यसगरं धृतिमन्तं नेतारं विधद्ध्वमिति । तच्छ्रुत्वा तेषु सर्वेषु
मठालयाश्रयिष्वहंयुष्वहं नेता भविष्याम्यहमेव नेतृपदवीग्रहण-
योग्य इत्यहपूर्विकयासमञ्जस मिथ स्पर्धमानेषु विहस्य स विप्र-
प्राग्रहरश्चक्रधरो भूयोऽपि व्याहार्षीद् रे रे वैधेया खल्वधीत-
शास्त्रा अपि विनयशीलाविज्ञा श्रोत्रियमन्या अहमतिकलुषिताशया
यूयं मिथो वैरायमाणा. कथ न लज्जध्वे संप्रति मद्वचनादिमा
संविदं कुरुध्वं यदद्य महाश्मशाने पातकिनस्त्रय पाटच्चरा न्यायत:
शूलाकीलिता व्यापादितास्तेषा नासिकात्रय परिच्छिद्य गाढान्ध-
तमसचोरितालोकायां निशीथिन्या योऽकुतोभयोऽत्रानेष्यति स एव

कलहप्रियाणां युष्माकं नायको भवत्विति । यथेदानीं युष्मद्धितैषिणा चक्रधरेणोपदिष्टं तथैव ग्रामसहस्रस्वाम्यं परिजिघृक्षुभिर्युष्माभिः क्रियतामिति प्रसंगतस्तत्रगतेन विदूषकेणाप्युक्ते रात्रौ प्रतिभयपितृवनगमनाद्भीतभीता वर्षवरसमनिष्पौरुषास्ते क्षुद्रजन्तवो ब्रह्मबन्धवो युगपन्मतिसाम्यमवलम्ब्येव वयं तमिस्रायां तत्र गन्तुमपि न शक्नुमः किं पुनः शवनासाश्छेत्तुं तद् यः कोऽपि प्रेतभूमितो नासिकात्रयमानयेत् सोऽस्माकमग्रणीस्तस्य वशेऽवश्यं स्थास्याम इति प्रत्यवादिषु । भो भो भीरवः श्मशानं गत्वानयामि शूलकीलितानां नासिकास्तिस्र इति निगद्य महासत्त्वसंपन्नो विदूषको ध्यानमात्रोपस्थितकृष्णवर्त्मचन्द्रहासद्वितीयः सूचिभेद्यतमोऽवगुण्ठितायां तस्यामेव तमिस्रायामुर्ध्वकेशविकटाकारानेकरात्रिंचरवेतालकोलाहलान्वितशवपललभोजन–हृष्टसारमेयवृकगृध्रादिविविधक्रव्यादसंघातनिनादभीषणं चटचटायमानप्रेतकलेवरस्रवद्रुधिरमेदोधारासततिसमधिकप्रजाज्वल्यमानज्वालाजिह्वं शवभक्षणोत्सवप्रमुदितनरीनृत्यमानभीषणकपालमालिभूतनिवहक्रीडोपवनं पितृवनं प्रविश्य तत्र शूलस्थापिताच्छोणितधारारूषितास्त्रीन् प्रश्यतोहरानद्राक्षीत् तत्क्षणाच्च तदन्तिकमुपसृत्य यावन्नासिकापरिच्छेदनाय तेजितधारमाग्नेयकरवालमुद्यमे तावच्चिरोत्क्रान्तप्राणा अपि तेऽपदेवताविष्टत्वात् सहसा सुदृढवद्धैर्मुष्टिभिस्तमतिभृशमताडन् तथापि विक्रमोर्जितमहासत्त्वोऽशिक्षितभीतिः सोऽपि तांश्चन्द्रहासेनातिवेलं प्रहृत्य तेषां नासाश्छित्त्वा वस्त्राञ्चले-

ऽभान्त्सीत् । ततो द्रुतं प्रत्यागच्छन् स विदूषको विविक्ते श्मशान-
कोणे प्रेतदेहस्योपरि कृतोपवेश मन्त्रजपनतत्पर तापसमेकं यदृच्छया
प्रेक्षाञ्चक्रे मुहूर्तान्तरे च तस्य शवस्य मुखात् फूत्कारपुरस्सर
ज्वाला नाभिकुहराच्च सर्षपा एकपदे निर्जग्मुस्ताश्च सर्षपान्
सहर्ष हस्ते कृत्वा स तापस करताडनेन समुत्थितस्य करालवेता-
लाधिष्ठितस्य शवस्य भुजशिखरार्पितजङ्घाद्वय सन् कौतूहला-
विष्टचेतसि तस्मिन् विदूषके पृष्ठत उपांश्वनुगच्छति कियद्दूरे
जराजर्जरितालोक शून्यदुर्गमन्दिरमासाद्य प्रेतदेहाधिष्ठिताय तस्मै
वेतालाय चपेट दत्त्वा तत्क्षणमुपविष्टस्य तस्य भुजशिरसोऽवत-
तार तदनु रुद्राणीमूर्तिसनाथ गर्भमन्दिर प्रविश्य परमसिद्धिसाध-
नैकाग्रमना साष्टाङ्गप्रणामस्तुतिपूर्वकं मनीषितवरदा ता शर्वाणी
सुचिरमाराध्य हे देवि त्रिभुवनेश्वरि भक्तवत्सले प्रीयसे चेद्
दीर्घकालसमीहितयोगप्रभावातिसर्जनेन भक्तिनम्रमिम जनमनु-
गृहाण न चेत् तर्हीदानीमात्मप्राणोपहार ते करोमीति तामभ्यर्थ-
याञ्चक्रे । एव याचमान त मायायोगिनं मस्करिण हे पुत्रक मा
तावद्, गच्छ चक्रवर्तिन आदित्यसेनस्य तनूद्भवा सुन्दरीमिहानीय
तस्या प्राणान् मे सपद्युपहर तथाकृते ते मनोरथ सम्यक् सेत्स्य-
तीति निशितधारनिर्स्त्रिंशाङ्कितचतुर्भजा कण्ठीरववाहना सत्त्वो-
पहारसततपुष्टविकटविग्रहा चण्डिका मुव्यक्त वभाषे । आकर्ण्य
तयो. समालापमशेष चिन्ताकुले स्वामिकल्याणैकतानमनसि तद्-
दुहितृप्राणपरित्राणकृतनिश्चये पुरोवसि विदूषके प्रच्छन्न तत्र

स्थितेऽसौ मृडानीसमादेशपुलकितान्तरङ्गस्तापसहतकः पुनरपि वेतालाधिरूढ. सन् वायुवेगेन राजभवनं गत्वा तस्मादतिभयमृतकल्पा राजपुत्री समानीय तत्रैव दुर्गायतने तां निपूदयितु प्रववृते। तस्मिन्नेव निमेषे सहसा प्रादुर्भूत उद्दामामर्पानलप्रदीप्तानन: स महावीरो विदूपकोऽतितीक्ष्णधाराविद्योतितदिक्चक्रेण चन्द्रहासधवलेन चन्द्रहासेन महापापस्य नरपशोस्तापसस्य दुराशयपरिपूर्णं मूर्धानं परिच्छिद्य मनुष्यरुधिरप्रिया तामपि कात्यायनी जगदीश्वरीं शिरोविहीनां कृत्वा च त्रासविनष्टसंज्ञां तामादित्यसेनसुता स्वभुजान्तराले धृत्वा सिद्धसर्पपपाणिश्चपेटिकां दत्त्वा वेतालस्कन्धमधिरुह्य व्योममार्गेण क्षणान्तरेण राजकन्यकान्त.पुरमासाद्य तत्र शय्यायां तां पुनर्लब्धचेतनामपि चकितचकितां कण्ठलग्ना निदधौ। अत्रान्तरेऽशरीरिणी भारती विहायसि समुदभूत्—हे लोकोत्तराप्रतिमपराक्रमशालिन् विदूपक मासावसाने तत्रैव दुर्गामन्दिरे त्वया पुनर्निश्चितमुपस्थातव्य तत्र तव मनोनुकूलं प्रिय समुत्पत्स्यत इति। आकर्ण्य तां दिव्यसरस्वती तत्र निधाय राजतनया निर्गन्तुमुद्यते तस्मिञ्जीवितत्रातरि विदूपके भयकम्पितवक्ष स्थली सा राजीवलोचना सार्वभौमदेहजा प्राणद बिभेमितमा मा विहाय मा गा इति भूयोऽपि तत्कण्ठावलम्बितबाहुलता सती त न पर्यत्याक्षीत्। सोऽपि तस्याः प्रार्थनानुरोधात् तत्र तस्थिवान् परिश्रमजनितया गाढमुपुप्सया परिजरीगृह्यमाणो न्यद्रासीत् ततश्च प्रातस्तरां सान्द्रप्रसुप्तं तं पुरोधसं प्रत्यक्षीकृत्य कञ्चुकिप्रमुखा

अन्तर्वशिका मङ्क्षु चक्रवर्तिनं व्यजिज्ञपन् । तेषा विज्ञप्ति कर्णे कृत्वा युगपत्सजातादभ्रकोप. स नरेश्वर आदित्यसेनस्तैस्त पुरोहित विदूषक तूर्णमानाय्य कन्यकाप्रासादे किं कृतं त्वयेति सरोष तमन्वयुक्त तेन च राज्ञा पृष्ट स परहितनिरतो महाशयो राजन् यदि श्रवणकौतूहल्य तर्हि त्वदीयामात्मजा नैशवृत्तान्तं प्रश्नयेति व्याहृत्य ततो निजदुहितृनिवेदितोदन्त विशृङ्खलविस्मय-प्रहर्षव्याकोशलोचन नृपमादाय तदेव चण्डिकामन्दिर गत्वा च निकृत्तशिरस त पापयोगिन मस्तकविवर्जिता दुर्गामूर्ति स्ववस्त्रा-ञ्चलबद्धं तस्करनासिकात्रय चातिविस्मितचेतसे तस्मै प्रादीदृशत् । अथ प्रमोदातिभूमि गतः कृतज्ञो राजाधिराज आदित्यसेनो भो विदूषक मामकासुसमात्मजाप्राणद त्वदुपकृत्या पुनरनुगृहीतो-ऽहं किं ते प्रियमुपहरामीति प्रीतिपूर्वं सविमर्श प्रोच्यैतत्सदृशो महानुभावसौहार्दशाली जामाता कुत्रापि सभवितु नार्हतीति मनसि विधाय तस्मै सुकृतिने महावीराय सततस्नेहास्पदीभूना स्वीया दुहितरमदात् । सोऽपि सौभाग्यवान् विदूषक सार्वभौमनृपानुरूप-भूरिवैवाहिकप्राभृतसभारसभृतयथाविधिसवृत्त-पाणिपीडनमहामह-पुरस्सर प्रत्यग्रविकसितहृद्ययौवनोपवनपुष्पमञ्जरी निर्विकारप्रणय-बहुमानैकपात्रीभूतप्राणत्रातृकरसपर्कामृतरससामिनिमीलितेन्दीवर-लोचनामादित्यसेनस्य चक्रवर्तिन सर्वाङ्गसुन्दरी श्रीनज्ञा लक्ष्मी-वसतिमिव परिपूर्णकान्तिमद्वपुपमौरसीमग्निसाक्षिक परिणीय नृपभवने वसतिं कुर्वन् हृदयगमनवनवप्रेमरसनिस्यन्दिन्या तया

नवोढया यथासुखं रंरम्यमाण आसिष्ट। एव परस्परसगमसुखितेषु प्रेमपीयूषप्रवाहनिर्भरेषु दिवसेषु क्षणेष्विव गच्छत्सु जातु ज्योत्स्नाद्योतितायां ज्योत्स्न्या कृतान्तप्रेरितेव सा श्री. प्राणेश्वरं भर्तार सवितर्कमुवाच हे प्राणाधिकप्रिय दुर्गामन्दिर मासपर्यवसाने त्वयागन्तव्यमिति तदानीतनोमाकाशवाणी किमनुस्मरसि यथा हि मासोऽद्य पर्यवसितस्तथा गन्तव्य तत्रेति। अयि प्रियतमे सुष्ठु स्मरसि मया तु तत् सर्वं विस्मृत हे चकितहरिणाक्षि यावदह तत्रैव गत्वा तूर्णमागच्छामि तावत् त्वमपि निद्रासौख्यमनुभवेति समुदीर्य ता कपोलभित्तौ परिचुम्ब्य ततस्तस्या निद्रिताया राजकुलवासगृहान्निर्गतश्चिन्तितमात्रोपस्थिताग्नेयनिस्त्रिंशद्वितीयः सन् कात्यायनीमन्दिर प्राप्य भो भो. कोऽत्र श्रूयता विदूषकोऽहमायातोऽस्मीत्युच्चैर्वारवार समुदैरिरत् तदनु प्रवेष्टव्यमित्यभ्यन्तरादुत्थितं वाक्य श्रुत्वा प्रविश्य च तत्र सुमण्डितदिव्यशयनीये समासीना तपोभङ्गकुपितविरूपाक्षतृतीयनेत्राग्निभस्मसात्कृतानङ्गजीवातुमिव शृङ्गाररसोद्दीपिका कान्तिरोचिष्णुनिजवपुर्द्युतिव्यर्थीकृतरत्नप्रदीपा विजिगीषुमीनकेतनमूर्धाभिषेकसुवर्णकलशायमानपीवरस्तनयुगलातिशय-मनोरमामतिपेशलाननेन्दु-निर्जितेन्दुबिम्बा दिव्यकन्यामद्राक्षीद् दृष्ट्वा च सद्य प्रबुद्धमनसिशयप्रेरितविशिखमूर्च्छित इव सविस्मय किमेतदिति तामप्राक्षीत्। इति पृष्टा सा दिव्यसुन्दरी प्रीतिपूर्वं तं विदूषक स्वागतीकृत्य सुखोपविष्ट तमेवमभ्यभाषिष्ट लोकोत्तरवीर श्रूयतामह त्वद्रूपसत्त्वावर्जिता

महाकुलसभवा भद्रा नाम विद्याधरी कामरूपकामचरत्वान्मासात् पूर्वमत्र विक्रान्त त्वा यदृच्छयाद्राक्ष ततो राजपत्री श्रियमादाय राजभवने कृतप्रवेश त्वा परिज्ञाय तदानोमशरीरिणी ता सरस्वती नभस्यकार्य तदेहि त्वयि गाढतरानुरक्ताया अक्षतयोनेर्मम वपुः साकल्येन स्वीकुरुष्वेति । सोऽपि तदीयातिमानुषरूपसपद्गुणाकृष्टमानसोऽनतिक्रमणीयमन्मथाज्ञावशवदो गान्धर्वेण परिणयविधिना तां भार्यां कृत्वा तया सम दिव्यसभोगाननिर्वचनीयरसान् यथारुचि समुपभुजान परमसुरतनिर्वृतिषु मर्त्यलोकदुर्लभासु दिवसानि बहुनि मुहूर्तमिव विद्याधरीप्रभावतिरस्कृतराजसुतास्मरणः सन् व्यत्यवीवहत् । अत्रान्तरे दीर्घयामायितत्रियामात्यये दुस्स्वप्नोत्थापिता नववधूः श्री प्राणनाथमनागत विदित्वा विरहनिर्वेदविक्लवा तदानीतनाकाशवाणीस्मारणलाघवजनितपश्चात्तापपरितप्तमतिरात्मनोऽपराध निन्दन्ती तस्यानिष्टा विपदमाशङ्कमाना ससम्भ्रम महादेव्यै मात्रे भर्तृतिरोधानवृत्तान्त यथासवृत्त न्यवीविदत चिन्तापूर्व च नच्छ्रुत्वा वत्सावत्सलया जनन्या तत्क्षणाद् वोधिततद्वृत्तान्तव्याकुलीभूतमना क्षितिभृदधिराज आदित्यसेनो जामातृस्नेहान्मङ्क्षूत्थायामनात् पुराध्यक्षराजयुध्वनिवहपरिवृत स्वय बहिर्गत्वा श्मशाननिकटवर्तिरुद्राणीमन्दिरादारभ्य सर्वत्र सर्वतश्च प्रयत्नतो विदूषक पर्यन्विष्यापि विद्याधरीविद्याप्रयोगतिरोधापितत्वात् तस्य छायामप्यलब्ध्वा सविषाद राजभवन प्रतिन्यवर्तिष्ट । तत आत्मजीविताधिकप्रियजीवितेश्वरादर्शनज-

परमपराधिपराभूताया निराहारमूकिमसमाश्रिताया नृपात्मजाया जातवेदसि स्वप्राणाहुतिं कर्तुकामाया कश्चिदागन्तुकस्त्रिकालज्ञो मुनि. पित्रो. समक्ष राजपुत्रि मा खलु विपदो दिव्यसभोगसुखितोऽक्षतदेहस्त्वदीयप्राणदायी भर्ता काल कियन्त क्षपयित्वा पूर्वाधिकानुभावविभवसपन्नो युष्मान् सर्वान् सुतरामानन्दयितुं प्रत्यागमिष्यतीति न्यगादोच्छ्रुत्वा च प्रत्याशादायि तद्वाक्य सा श्रीः पतिवियोगासहापि सप्रहृष्टा सती सुकुमारपुष्पवज्जीवितधारणाय मनोऽकृत। अथातिहृद्यसहवाससंप्रमोदेपु काले याति कदाचिद् योगेश्वरी नाम विद्याधरयोषिदकस्मादाविर्भूय दयितेन विदूपकेण सार्धं रममाणा सहचरी भद्रा सचिन्तमवादीदयि सखि मर्त्यसगतां त्वा ज्ञात्वा कुपितास्ते विद्याधरभूपाः शापदण्डेन त्वा निजिघृक्षन्ति तदितः क्षिप्र विद्याधरलोकाप्राप्य सिद्धलोकजुष्टमुदयशिखरिणं याहि तत्र त्वदर्थं मया लब्ध शरणं तत्रानुपदमागमिष्यता कामिनानेन पुनरपि सगमिष्यस इति। असहनीयशापनिपातभयाद् गत्यन्तराभावाच्च सौहार्दराशि तद्वचोऽङ्गीकृत्य साश्रुवदना सा भद्रा प्रेयसे विदूपकाय निजागुलीयक सर्वविघ्नघ्न समर्प्य दृढपरिरम्भणपुरस्सर तमापृच्छ्य पौरुहूतीमुद्दिश्य ककुभं समुत्पपात। तस्या सहसा दृग्गोचरादद्दर्शन यातायामसौ कामुक. स्निग्धविद्याधरीविश्लेपसतापप्रमथितान्तरात्मा क्षणमुन्मदिष्णुरिव क्षणं विनष्टचेतन इव हा भद्रे हा शश्वद्बद्धदिस्ये क्वासीति विलपन् तदगुलीयक परिचुम्बन् सस्मृतविद्याधरीवचनोऽपि विस्मृतराज-

पुत्रीको भूत्वा सर्वाशानिधि लोकलोचनोदयभूधर सहस्रसहस्रयोजन-विप्रकृष्टमभिमुखमैन्द्रदिक्प्रयाणे पदं चक्रे ततो भूरितिथे कालेऽतिक्रान्ते पौण्ड्रवर्धनसंज्ञकं पुण्ड्रजनपदप्रमुखपुटभेदन समासाद्य दीर्घीभूताध्वपरिश्रमातुरः कस्याश्चन स्थविराया द्विजगृहिण्या वसतिं प्रविश्य हे अम्ब विप्रपथिकोऽस्मि देहि मे केवलमेकरात्र-प्रतिश्रयमिति तामभिययाचे । दीर्घप्रयाणमार्गसचितपांशुमलिनीकृतकलेवरमपि कालमेघतिरस्कृतालोक सहस्रदीधितिमिवाभिजनानुसूचकसौम्याकृतिदर्शितसहजतेजसं तमध्वनीन प्राज्यातिथि-सत्क्रियाविधिना देहमालिन्यक्षुत्पिपासानुदस्नानभक्ष्यपेयसमुपेतेन संपूज्य सा वयोवृद्धा ब्राह्मणी विधवा साय सुखोपविष्ट त सदीर्घ-नि.श्वासमभिबभाषेऽयि पुत्रक यथा मदीयजीवित पर्यवसितप्राय-मिदानी संवृत्तं तथाभिमतेन त्वया स्वीक्रियतामिदं सकल गृहादिक-मस्मत्स्वापतेयमिति तन्निशम्य विस्मयकोटिमारूढेन तेन कस्माद-कस्मादित्थ वदसीति पृष्टे च सा प्रत्युवाद पुरीहास्ति पुण्ड्रदेशाधि-नाथस्य देवसेनाभिधस्य नि शेषभूतलयोषिल्ललामभृतेव लोकाधिक-कान्तिद्युतितसर्वाङ्गाभिरामा मया दु खाल्लब्धेति दु खलब्धिकेति पित्रा कृतसंज्ञा तनूजा हा शान्तं पाप यो यस्तया कृतविवाह. स स ध्रुवं दिष्टान्त गच्छति क्रमानुसारेण नृपाज्ञया सैन्यै प्रतिरात्रम-पह्वतानि पुरुषशतानि भयानके मृत्युमुखेऽपतन्नद्य तु प्रतिकूलदैव-दुर्विपाकान्मन्दभागाया हताशाया मेऽङ्गजस्य क्रमे समायातेऽधुनैव वराकोऽयं तत्र राजकुले नीयतेऽहहा शान्त पाप ध्रुवं राजसुताया

उपकण्ठं नीयमानस्य पापायाः ममैकपुत्रस्य मरणं भविष्यति तस्मात् कारणाद् दग्धविधिदग्धापि साहं पुत्रसमाय ते वेश्मान्वितं सर्वं रिक्थ स्वय दत्त्वा प्रभाते चितामारोक्ष्यामीति। एव सविषाद-मुक्त्वा समीपस्थमात्मज क्रोडीकृत्य स्थविरापि वात्सल्योद्रेकक्ष-रत्स्तन्यार्द्रीभुजान्तराला तं गात्रेषु समस्तेषु स्पर्शं स्पर्शमतिस्ने-हाच्छिरसि सस्पृहमुपजिघ्रन्ती नि शब्द रुरोद ता च दृष्ट्वा निर्वेद-निराशामेकपुत्रातिवत्सला लोकोत्तमवीर्यवानकुतोभय परदु.ख-दु खितो दीनबन्धुर्विदूषको हे मातर् जीवतु शरदा शतं ते पुत्ररत्न सम्प्रति त्वत्पुत्रस्थानेऽहमेव तत्र गच्छामि ततो न कर्हिचिदपि ज्ञात-त्रासमरिष्टशरीरमुद्घाटितराजतनयारहस्य पुनरागत मा द्रक्ष्य-सीति सुव्यक्त व्याहृत्य तया सपुत्रया सनिर्बन्धं निषिद्धोऽपि तत्क्षणागतैरायुधजीविभि सार्धं यमसदनसंकाशं पौण्ड्रजानपदसमु-दायभयनिवास नृपात्मजाशय्यागृहमयासीन्नचिराच्च तत्र प्रविश्य पर शतपुरुषव्यूढपूर्वापि केनापि पुरुषेणासंस्पृष्टदेहा भुवि परिभ्रष्टा सैंहिकग्रस्तमूर्तेः कुमुदबान्धवस्य ज्योत्स्नामिवातनुवपुश्चन्द्रिका-द्योतितशय्यागारामपि वृषध्वजतार्तीयीकलोचनवह्निप्लुष्टपतिवि-नाशाभिशोकमृदिता मन्मथभार्यामिव दुर्विगाहचिन्ताविषादाकू-पारनिमग्ना नृपतनुसम्भवा दुःखलब्धिका दृष्ट्वा तद्रहस्यपरिज्ञान-कौतूहलकीलितमना ध्यानसमकालोपस्थितानेयासिहस्त सन् द्वार-देशे तूष्णी तस्थौ। ततोऽर्धरात्रे सजाते दृढदत्तार्गल द्वारमुद्घाट्य निजग्रीवाजिघृक्षा प्रवेशित गजयूथपहस्ताकारं विकटाग्निधेनुकाव-

दतितीक्ष्णनखरभीषण वलीमुखभुजवद्रोमश बाहुं रम्भास्तम्भमि-
वैकेनैव प्रहारेण करवालेनाञ्जसोत्कृत्य स महावीरो विदूषको
भुजच्छेदकृतार्तस्वर तथापि निमेषान्तरोत्थितरोषानलप्रदीप्तोल्मु-
कसनिभाक्ष महाद्रिशृङ्गप्रांशुकायमूर्ध्वकेशविततास्यप्रतिभयरूप
कृतान्तकिंकरमिवाभिपतन्त निशाचर तेनैव दिव्यकरवालेनोत्कृत्यो-
त्कृत्य यमधानीमजीगमत् । अथ प्रभाताया रजन्या सूर्योदये-
ऽमात्यसेनानीप्रभृतिभिर्महामात्रैः सम द्रुतमागत्य स्वदुहितृवसतौ
रुधिरप्रवाहस्नपितकरालाकृतिविस्मापितलोकलोचन पर.शतमा-
नुषशोणितप कृपाणशतधाव्रणितमुपिरकलेवर महाराक्षस प्रत्यक्षी-
कृत्य च पौण्ड्रभूपालो देवसेनो विस्मयातिशयस्तब्ध इव व्यपेत-
प्राणस्य महारक्षसो वपुषि कीलितदृष्टिश्चिर निश्चल स्थित्वा
ततोऽचिन्त्यविक्रमसंपन्नाय महातेजोरूपाभिजननिधये तस्मै
विदूषकाय संप्रमोदातिरेकस्मेरानन सन् स्वदुहितु पाणिकिसलय
राजोचितसपदुत्तरं विधिवत् प्रददौ । तदनु वीतज्वराशेषपौरजान-
पदाभिनन्दितकौतुकमगलः सौजन्यनिलय आर्तबन्धुरस्मन्नायको
विदूषकोऽपि ता वरारोहा प्राढयौवनस्था राजकन्यामुपयम्य कति-
पयवासरास्तया दीर्घकालोपचितानुपभुक्तसुरतरसनिर्भरया सवेश-
सुखानि प्रकाम निर्विवेश ततश्चैकस्मिन् दिवसे हे वामलोचने यत्
किमप्यवश्यमनुष्ठेय कार्यान्तर वर्तते तत् सपादयितुमद्य जन-
पदान्तरप्रस्थान करोमि द्विसप्ताहान्तरेऽत्र परावर्तिष्य इति भार्या
दु खलविधुरा परिचुम्बनपारितोषिकदानेन कथञ्चिदनुनीय लब्ध-

राजानुमतिर्विद्याधरीभद्रासमागमोन्मुखः पूर्वाशाभिमुखः पुनः प्रतस्थे। ततो द्रुततरगतिरूर्जस्वलवीर्यवान् विदूषकः पूर्वार्णववेलानिकटवर्तिनीं महापुरीं ताम्रलिप्तिकां प्राप्य वाणिज्यव्यवहारार्थं पारावारपारं यियासुना स्कन्ददासनाम्ना सांयात्रिकेण दत्तसहयानानुज्ञस्तस्य प्रचुरभाण्डभारसञ्चितां नावमधिरुह्यादृष्टपारमण्डलाकाराकूपारतितीर्षया प्रबलविद्याधरीप्रेमपाशाचरीकृष्यमाणान्तरात्मा सोत्कण्ठं प्रस्थानं चक्रे। अथ महाकल्लोलमालासमुल्लसितं सागरमध्यभागमासाद्य सहसा बृहच्छिलोच्चयसंलग्नायामिव स्तिमितगत्यां तस्यां नावि निश्चलीभूतायां वणिक्स्वभावस्याल्पसत्त्वमयत्वादतित्रासवैक्लव्यातुरः स स्कन्ददासोऽदभ्राभिराहुतिभिः समुद्राधिदेवं पाशपाणिं वरुणमारराध तथापि प्रयत्नतो विहित आराधने मोघीभूते सर्वविनाशभीरुरसौ पोतवणिक् शपथपूर्वं सर्वेषु चिन्ताभयाकुलेषु यात्रिकेष्वाकर्णयत्सु तारं निजगाद भो भो युष्मासु यः कोऽपि केनापि प्रतिरुद्धां नावं मदीयां विमोचयति तस्मै जीवितप्रदायिने महोपकारिणेऽत्रारोपितस्वापतेयार्धं दुहितरं चोपहरामीति। श्रुत्वापि महाभोगप्रतिश्रुतिगर्भं तद्वाक्यं क्लीबसमेषु तेषु मूकीभूतेषु सततार्तसमुद्धरणसाहसप्रियो रज्जुदृढबद्धकक्षो विदूषकः स्मितपूर्वं बभाण भो स्कन्ददास मध्येसमुद्रं विगाह्य युगपन्निराकृतसंरोधकमिदं तेऽर्णवयानं प्रचालयामि तद् विमुक्तायां नौकायामवलम्बनरज्जुभिर्मामुद्धर्तुमर्हसीति तदनन्तरं च तेन प्रहृष्टचेतसा सांयात्रिकेण तथेति प्रतिपन्ने नावोऽधस्ताद् विगाह्य

चिन्तितमात्र-सहसोपागत- दिव्य-चन्द्रहासाङ्कित-वामेतरपाणिस्तत्र निद्राण कोशायताभोग तर्कातीतसागरपर्वतायमानविकटाकृति तिमिंगिलगिल दृष्ट्वा मर्मसु प्रहृत्य चन्द्रहासेन निशातधाराप्रभा-दूरीकृततमसा त शतधा निचकर्त। तस्मिन्नेव मुहूर्ते प्रवहणे प्रचलिते महासत्त्व निखिलयात्रिकप्राणसमुद्धर्तार त विदूषक-मुन्मग्नमवलोक्य स पोतवणिग् नरपशुः स्कन्ददास स्वय प्रति-श्रुतधनलोलुपावशात् तस्यावलम्बनरज्जू परिच्छिद्यानुकूलवात-प्रचोदितेन तेन प्रवहणेन तूर्णमपससार। इत्थकार तेन कृतघ्नेन निकृष्टव्यवहारकाधमेन सर्वंकपदष्ट्रादंतुरे मृत्युमुखे निष्कृप निपा-तितोऽप्यचलवदचलधैर्यसागरो विक्रान्ताना प्राग्रहरो विदूषक उत्प्लवमान· कल्लोलमालासक्षोभिते समुद्रतले दैवादुत्प्लवमानं निषूदितस्य तिमिंगिलाशनस्य महीयांस खण्डमारुह्य हस्तक्षेपणी-भ्यामम्बुराशीन् व्यस्य कृच्छ्राद्विपन्महार्णव त महार्णव चोत्त-तार। सोच्छ्वासं पारमासाद्य महायादसापतितरंगातिप्रयासज-परिश्रममृदितवर्ष्मा स सत्त्ववता वरो विदूषकश्छायाद्रुममूले विश्र-मितु यावदुपविवेश तावदकस्माद्विहायम समुत्थिता दिव्यभारती भो महावीर विदूषक प्रीतोऽस्मि स्थिरधृतिनिधेस्तव कृत्स्नजगच्च-मत्कारिणा पौरुषेण त्वत्कल्याणाभिलाषिणी हुतभुजो मम प्रसादा-दद्यप्रभृति बुभुक्षापिपासापरिश्रमविनाकृतस्त्वमप्रमेयसौहार्दविक्रम-भूषणः सप्ताहेन कार्कोटकनगरीमतिक्रम्य तत क्षिप्रमुदयशैलमा-साद्य कृतार्थीकृतमनोरथो भविष्यसि तद्र वत्स सप्रति पूर्णाशा

पूर्वाशा प्रति प्रतिष्ठस्व सन्तु शुभकरास्ते पन्थान इति तमभिन-
नन्द । कपोटयोनिवचनाकर्णनसमकालव्यपेताङ्गग्लानि प्रमुदित-
मानसो मक्षूत्थाय विद्याधरयोपित्पुन समागमप्रत्याशावस्कान्ता-
कृष्यमाणसर्वाङ्ग सन् निरन्तरप्रयाणमार्गे भूयः पद निचिक्षेप
ततो योजनशताध्वान समुल्लङ्घ्य सप्तमेऽह्नि कार्कोटक नाम
राजार्यवर्माधिष्ठित पत्तनं समासाद्य प्रदोषे भो भो शृणुत य-
कोऽपि मेदिनीभर्तुरार्यवर्मणो लोकोत्तरवरवर्णिनीं तनया प्रातस्त-
रामुपयियसति स नक्तमद्य तद्वासगृहमधिवसत्विति बारबार
दुन्दुभिध्वनिपुरस्सर राजभृत्यैर्घण्टापथे साकूतमुच्चार्यमाण घोषण
निशम्य तत्रायमयं गच्छामीत्युच्चैर्व्याहृत्य तत्रत्यैर्नागरिकैर्हे वैदेशिक
कथमिव निर्विचारस्त्व पतङ्गो ज्वलनमुखमिव नृपसुतावसतिवेश्म
प्रवेष्टुमुत्सहसे ये सङ्ख्यातिगा साहसाध्यवसायिनो युवानो विवृत-
कृतान्तास्यसन्निभे तत्र रात्रौ रात्रौ प्राविक्षस्ते सर्वे विदारिताङ्गा
अपमृत्युमयासिषुस्तद् यदि क्षेममात्मनः समीहसे तत्रगमनसाहसं
मा स्म कार्षीरिति सौहार्दान्निवारितोऽपि स्मयमान प्रीतिपूर्वक-
मर्पितात्मा राजकिङ्करैस्तैर्दर्शितमार्गो राजकुल प्राविक्षत् । स्वागतं
ते वीर मदीयतनूजाशय्यागारेऽद्य विभावरी कृत्स्ना क्षेमेण यापयसि
चेत् तर्हि त्व पुत्रतमविभूतिसत्क्रियासमानितेन त्वया दुहितुः कर
ग्राहयिष्यामीति सविद दत्त्वा राज्ञा सुस्वादुभोजनोपेतातिथेयसत्कृतः
स साहसिकानामग्रेसरो विदूषको महीक्षित्तनयाशयनगृह निशि
प्रविश्य तत्र राहुग्रसनाद्भुवि परिच्युता चन्द्रमसो मूर्तिमिव मनो-

भिरामकान्तिमद्वपुषमपि निर्वेदव्यथातुरामभिशोकमयीमिव निरन्त-रप्रवहद्वाष्पविन्दुसततिनिष्पादितकृत्रिममुक्तावलीसनाथ-कुचतटीमद्यापि मदर्थेऽपर जीवित लोकमिम नूनमापृच्छेतेति नि शब्द क्रन्दन्ती शय्यागता ता राजकुमारीमवालोकिष्ट ततो निशीथे मन्दीभूतत्विषि प्रदीपे कथमपि लब्धनिद्राया नृपात्मजाया सहसा प्रादुर्भावितातिभीषणमहाकार्य रात्रिचरमभिपत्य शिरोरुहेषु वामेन हस्तेनातिभृश गृहीत्वा दक्षिणकरधृतेनातनुद्युतिमुषिततमसा चन्द्रहासाधिकशुभ्रेण दिव्यचन्द्रहासेन न निहन्तु प्रावर्तिष्ट । तस्मिन्नेव निमेषे शिखरिशिखराभप्राशुकलेवरोऽधृष्यभुजव्रतोत्मिक्तोऽप्यसौ राक्षसेन्द्रो बलीयसस्तस्य महापराक्रमभीषित सन् प्रभोऽभय देहि मा मा खलु जह्यद्यप्रभृति त्वदाज्ञावशवदो भूत्वा तत् तन्निर्विकारेण निर्ममेण मनसा करिष्यामि यद्यदिच्छमीति साष्टाङ्गप्रणतिपुरस्सरमवोचत् । इत्येवमभय याचमान रात्रिचर विमुच्य किनामा त्व कस्मादेव महापातकमत्र प्रतिरात्रमाचरसीति तेन महातेजसा विदूषकेणानुयुक्त स रजनिचरेन्द्रो हे सखे मया शाश्वतिक सख्य वधान यमदष्ट्र इति सज्ञितोऽह महाश्मशाननिवासिना पार्वतीजानिन समादिष्टो नपुसककल्पाना वीर्यरहिनाना पुसा सगमाद् वीरभोग्यामिमा नृपसुता निवारयाम्यधुना तु मनाचिन्तिनपराजयादप्रतिमविक्रमस्य महावीरस्य ते हस्ते गतैषा राजपुत्री तदद्युना साधयामि यदा यदा मा स्मरिष्यसि तदा तदा त्वत्कृतेऽह त्वामुपस्थास्ये सर्वास्ववस्थास्वपीति समय दत्त्वा तिरोऽधात् । तत:

प्रभाते सकलपौरलोकस्तुताद्भुतबाहुबलः पुण्यकर्मा विदूषकः प्रमुदितेन क्ष्माभृता प्राज्यविभवेन सम समर्पिता विपादसागरोत्तीर्णामकाण्डसौभाग्योदयविकस्वरस्मिताननेन्दु सुचिरमनोषितविवाहपरमनिर्वृ तिरोमाञ्चितसर्वाङ्गमनोरमामभुक्तपूर्वपीयूषसकाशगुरवरसनिर्भरा ता वामलोचनामप्यवामहृदया कन्यामुपयम्य कंचित् समयं तया नवनवरिरसया सहवाससौख्यमनुभूय विरहविधुरां साश्रुवदना ता पुनरागमनप्रतिश्रुतिदानेन कृच्छ्रादामन्त्र्य लोकलोचनोदयमहीध्रोन्मुखः सन् दुरासदपर्वतमालातरङ्गिणीनिवहसकट मानुपानतिक्रमणीयमध्वानमग्रे दृष्ट्वा सहाय त राक्षसेन्द्रमस्मार्षीत् तत्क्षणाच्च सन्निहित कृताञ्जलि त वयस्य विद्याधरयोषिद्भ्रद्रासगमाय मया सिद्धलोकाध्युषित उदयाद्रिर्यातव्य इत्यभिभाष्य तथेति प्रतिपन्नवाक्यस्य तस्य भुजशिखरमधिरुह्य मनोजवेन तेन वाबह्यमानो मनोरथशतेनाप्यगम्या मनसाप्यप्राप्या तिग्माशूदयशैलपर्यन्तभुव प्रियासमागममनोरथसिद्धिदायिनीमासादीत्। सखे पश्य पुरतो दृश्यमानः सोऽय नैसर्गिकमहानुभावविरोचिष्णुदिव्यालोको गिरीन्द्राधिनाथ उदयगिरिर्नामास्ति परिसरोद्देशादित. पर मे गमनशक्तिर्नास्ति तत् पादचारेण त्वया गन्तव्य तत्रेत्युक्त्वा लब्धानुमतौ तस्मिन् महारक्षसि क्वाप्यन्तर्हिते कतिपयानि पदानि गत्वा सुरभिपरिमलमुभगनानावर्णसरसीरुहविराजितं तृष्णापहप्रसन्नशीताम्बुपरिपूर्णं मनोज्ञं सरोवरं च तोयभरितान् सुवर्णकलशान् धृत्वा गच्छन्तीः सिद्धसुन्दरीश्चा-

द्राक्षीत् । अथानल्पकौतुकाकृष्टेन तेन विदूषकेण हे पुण्यशीलाः कुत्र तदुदकं नयथेति सस्मितं पृष्टास्ताः सिद्धयोषितः सौम्य सहस्रदीधितिप्रादुर्भावपावनेऽत्र शिखरिणि विद्याधरेन्द्रतनया भद्रा नाम मनुजसङ्गमकुपितविद्याधरशापभयात् पलायिता प्रवसति तस्याः स्नानार्थमिदं नीरमस्माभिर्नीयत इति प्रत्यवोचस्ततश्चैकतमा तमभ्यभापिष्ट सुभग शिरसि मे कलशोऽयं निधीयतामिति । दयिताकुशलप्रवृत्तिशसिना तेनैव वनचामृतेन संसिक्त इव प्रहृष्टमना विदूषको वारिकुम्भं तस्या सिद्धाङ्गनाया मूर्ध्नि समारोप्य तत्र कुम्भे प्रत्यभिज्ञानांगुलीयक निभृतमवक्षिप्य तत सोत्सुक दीर्घिकाकूले न्यसदत् । अत्रान्तरे सिद्धेन्द्रभवने ताभिर्युवतिभिर्दीय मानेनाम्भसा स्नान्ती सा विद्याधरी भद्रा कलशादधो निपतित निजरत्नांगुलीयकं सविस्मय निरीक्ष्य सोत्कण्ठमयि सख्य. कोऽपि चक्षुष्याकृतिर्युवा किं युष्माकं दृष्टिगोचरे प्रादुर्भूत इत्यप्राक्षीत् । अतनुद्युतिशोभिताकारो मनुष्य सरोवरतटस्थोऽस्माभिरदर्शि तेनैष सुवर्णकलश. शिरस्युत्क्षिप्त इति ताभि. प्रत्युक्ते प्रियसमागमपुलकितविग्रहा सा पुनस्ता अवादीदहो हन्त मे प्राणनाथ. समायातो हन्त जीवित मे सफलीभूतमिदानी हे सहचर्य शीघ्रं तमत्रानयत सततहृदिस्थ मम हृदयवल्लभमिति । तथेति प्रतिपद्य दीर्घकालविरहितप्रियभर्तृपुनर्दर्शनसंप्रमोदप्रफुल्लतद्वदनाम्भोजावलोकनमात्रसजातादभ्रस्मितिविकसितनयना स्पृहणीयसौजन्यस्नेहहृदयालवस्ता. सिद्धप्रमदा द्रुत गत्वा दिव्यवापीमध्याप्लवनिर्मलीकृत-

शुभ्रवपुषं पर्यवसितप्रायभार्याविरहावधिकं प्रणयिन विदूषक विद्याधरीसमक्षमानेषु । आगच्छन् विक्रान्ताना प्राप्य स कामी निजागमनवर्त्मार्पितनिश्चलाक्षी बहुतिथकालविश्लेषपरितापानलसंतप्तदुर्बलाङ्गी प्रसूनकोमलमन.शोषणोत्कलिकासहस्रकीलितहृदया सर्वलोकचमत्कारिण स्वपराक्रमभूरहस्य चिरात्परिणतफलसमृद्धिमिव दुर्लभमनोरथसिद्धिमिव हृदयप्रमोदिनी तामारात् सोत्सुकमवालोकिष्ट तत्क्षणं च सापि भद्रा भद्रानना प्राणनाथं त्वरितगति दृष्ट्वैव ससम्भ्रममभ्युद्गम्य च हन्त भद्रे सोऽहमायातोऽस्मि ते प्रणयनिधिर्मनोरथशतास्पदीभूत इति समुच्चारणपुरस्सरं दूरप्रसारितभुजयुगल तु दयितदयित बाहुलताभ्या सुदृढ कण्ठेऽवलम्ब्य प्रमोदातिशयोद्गतवाष्पाम्बुना तस्याधुविलन्नमपि वदनमसिष्णपत् । तदनु गाढकण्ठाश्लेषपरिचुम्बनपूर्वं विद्याधरसुन्दर्या तया हे प्राणाधिकदयित कथममर्त्यसंचारा मनोरथसहस्रेणापि मानवैरप्राप्या भूमिमेना प्राप्तवानसीति सप्रणयकौतुकपेशलमनुयुक्तः स साहसिक. प्रत्यवादीदयि हृदयवल्लभे बलीयसा त्वदनुरागायस्कान्तेन लोहखण्डवदाकृष्यमाणोऽहं प्राणसकटानि महान्ति समुल्लङ्घ्य त्वदन्तिक प्राप्तोऽस्मि किं बहुनेति । केवलं प्रणयस्यार्थे सहर्षमुपेक्षितस्वजीवित त प्राणेश्वरं परमार्थतो विज्ञाय बहुगुणीभूतस्नेहबहुमाना सा वरारोहा परिपक्वबिम्बाधरेण रागोद्रेकात् तमभीक्ष्ण परिचुम्बन्ती हे प्रेयन् दिव्यविद्याप्रभावेन किं विद्याधरीभावेनापि किं मे प्रयोजनमात्मा तेऽर्पितः कार्त्स्न्येन यत्र यत्र त्वं

तत्र तत्राहमपि त्वया सार्धं वत्स्यामीति सस्नेहमभाणीत् । ततस्तत्र विरहसमयराशीभूतरिरंसेषु पौनःपुन्यप्रवर्तितेषु हृदयंगमसुरतसमुपभोगेषु मानसिकशारीरकक्षणदा क्षणदा ता क्षणमात्रमिव तया सहातिवाह्योदयगिरिपरिसरभूपर्यन्तं सौहार्देनानुगता साश्रुलोचनास्ता सिद्धयुवती ममामन्त्र्य तृणवत्परित्यक्तविद्याधरीभावा भर्त्रेकपरायणामतिस्नेहोररीकृतमर्त्यावस्था भद्रां भद्रमुखीमादाय सुकृतिनां वरेण्य प्रियासंगमसुखितो विदूषको ध्यानमात्रोपस्थितयमदंष्ट्राभिधराक्षसस्कन्धारूढः सन् विहायसा तूर्णं कार्कोटकनगरीमासाद्य तत्रत्येन नृपेणार्यवर्मणा दत्तपूर्वां पतिसमागमपुलकितशरीरामपरां जायामपि राक्षसवाहनेऽध्यारोप्य ततोऽचिरेणैव पूर्वार्णववेलास्थां ताम्रलिप्तिपुरं प्राप्य सर्वलोकजुगुप्सितदुरात्मनो वणिगधमस्य स्कन्ददासस्य सर्वस्वेन साकं तदानीं नौविमोचनपणप्रतिश्रुतां तत्सुतामपहृत्य वाहनारोपितां तामप्यादाय ततः स्वल्पेनैव कालेन पौड्रवर्धनपुटभेदनमागत्य क्षितिभृता श्वशुरेण देवसेनेन भृशं समानितः सन् कियन्तं कालं तत्र विश्रान्तिसुखमनुभूय भूरिहिरण्यसंचयेन समं तेन राज्ञोपहृतां निजभार्यां परस्परपुनर्दर्शनरामाञ्चितसर्वाङ्गसुन्दरीं दुःखलब्धिकां नाम रजनीचरेन्द्रस्कन्धेऽधिष्ठाप्य स्वोयजनपदशीघ्रगमनसमुत्सुको भूत्वोज्जयिनीं प्रति यथापूर्वं व्योममार्गेण प्रयाणमकृत ततश्च स्वप्नेष्वपि कर्हिचिद् न विस्मृतस्य स्वस्निग्धदेशस्य पुनर्दर्शनसौख्यमनुभवन् गवलदिग्विजयं कृत्वा परावर्तमानो जिष्णुरिव सबाल-

स्त्रीनमग्नपौरलोकविस्मयेविस्फारितनेत्रपेपीयमानाद्भुतदर्शन. प्राज्यहिरण्यरत्नराशीन् मञ्जुलाकृतिविशोभितचतुर्वरारोहासहितो जंगमविन्ध्याद्रिशृङ्गप्रमाणमहाकायरात्रिचरेन्द्रभुजशिरोऽधिष्ठित शनैः शनैर्मूर्तिमती निर्वृतिमिवाप्रमेयानदथुदायिनीमात्मीया महापुरीमुज्जयिनी प्राविक्षत् । क्षणान्तरेऽतिविस्मयव्याकुलीभूतमनोभि पुराध्यक्षप्रमुखैर्नागरिकै सत्वरविज्ञप्तमहाघोरराक्षसाधिरूढप्रमदाचतुष्टयसमन्वितजामातृसमागमः कौतूहल्यप्रहर्षव्यतिकरसमधिकोत्कण्ठितचेताश्चक्रवर्ती स्वय तमभिनन्दितु सहसाभ्युत्थाय बहिर्मार्गे निर्जगाम । सोऽपि विदूषको जामातृस्नेहादारात् त्वरमागच्छन्त श्वशुर दृग्गोचरीकृत्य यमदंष्टस्कन्धात् प्रौढयौवनोद्यानपुष्पमञ्जरीसन्निभास्ताश्चतस्त्र स्वभार्या विपुलद्युम्नसभारैः सहावतार्य ससंभ्रममुपागत्य च श्वशुरमादित्यसेन सादरं प्रणनाम । अयि विदूषक सुचिराद् दृष्टोऽसि कालमेतावन्तमतिवाह्य कुत आगतोऽसीति सनिन्दमिवोक्त्वा सार्वभौम आदित्यसेनस्त जामातर प्रीतिपूर्वं परिरभ्य तदनु तेन सम प्रहृष्टान्तरात्मा सहनतमृणिवंधूभिः कृतानुयात्र कौतुकाकृष्टसकलातिगप्रजासमवायोच्चारितैर्वधिरितकृत्स्नककुभिर्जयशब्दैस्तोष्टूयमानो निजमन्दिर प्राविशत् । तत्राकाण्डोपनतभर्तृ विरहदौर्भाग्यमृदितामकालप्रालेयमथिता पद्मिनीमिव रमणस्य क्षिपापतेरस्याबलम्बिताशा तत्प्रतिनिवर्तनघृतप्रत्याशामाश्रितजीविता चक्रवर्तितनूद्भवा सौया प्रवनायाम तृप्तदृष्टिपातपीयूषेण नितरामानन्दयन् प्रीतिस्मेराननेन श्वसुरेण

कुत एता योषितस्त्वया प्राप्ता कश्चासौ राक्षस· कालमियन्त कुत्र तस्थिवास्त्व किमकार्षीरिति सकौतुक पृष्ट सन् यथावृत्त निखिलवृत्तान्तजाल विस्तरशस्तस्मै विस्मितचेतसे न्यवेदयत् । ततो महाविक्रमसौहार्दपरितुष्टेन चक्रवर्तिना विश्राणित प्राज्य-वैभवोपेतमर्धराज्यमवाप्य विप्रराजभूतो विदूषक कालक्रमानुसारेण चतुरर्णवमेखलमशेषं मेदिनीमण्डलं विजित्य समग्रराजकमौलि-रत्नारुणच्छविलाञ्छितचरणतल सन् पञ्चभिर्देवीभिरज्ञातेर्ष्या-कोपाभि पतिदेवताभिर्निर्विकारेण सप्रणयबहुमानेनोपचर्यमाणो यावज्जीवमनपायिनी लक्ष्मीमुपबुभुजे । इति वत्सराजकथिता विचि-त्राश्चर्यरसप्रसूति महावीरकथामुपश्रुत्य पार्श्ववर्तिनो वासवदत्ता-पद्मावतीसहितास्ते मन्त्रिप्रमुखा· सर्वेऽतिभृशचमत्कारिकथाश्रवण-सतुष्टा पुष्कला मुदमनुबभूवुः ।

इति श्रीवाक्कन्वेविरचिते कथारत्नाकरे प्रथमस्तरङ्ग समाप्त ।

•••○•••